॥ हरिः ॐ ॥

श्रीरामाय नमः

# अनुभाष्य गाम्भीर्यम्

श्रीर्देवी यस्य भार्या खगपतिगरुडो यस्य वाहः फणीन्द्रः
शय्या यस्याङ्कलग्ना विधिमुखविबुधा यस्य नाभौ सरोजे ।
यस्य श्रीमुक्तसङ्गैः परिचरणविधिश्शास्त्रतस्सुप्रसिद्ध
स्सोऽयं रामाख्यविष्णुर्मम दिशतु सुखं मङ्गलं मङ्गलानाम् ॥

तत्तद्भाष्यपरैर्ये दोषाश्शाङ्करे कथिताः ।
ते शाङ्करभाष्यार्थैर्दूरे तिष्ठन्ति न स्पृशन्त्येतम् ॥
इत्येतद्विशदयितुं मतिरेषा वै ममाधुना जाता ।
रघुमण्डनसंस्मरणं हेतुस्तस्यां ममास्ति सततं हि ॥
श्रीराममुख्यविदुषा भाष्यगाम्भीर्यवर्त्मना ।
भगवत्पादभाष्यार्थो रूप्यते तत्त्वदर्शिना ॥

'वैलक्षण्याच्च न स्वप्नादिवत्' इति सूत्रे भगवत्पादभाष्यं— वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पुनर्वैधर्म्यं बाधाबाधावि-ति ब्रूमः बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य नचैवं जागरि-तोपलब्धं स्तम्भादिकं कस्याञ्चिदवस्थायांबाध्यते-इति। तेन भाष्ये-ण स्वप्नोपलब्धवस्तुनः बाध्यत्वरूपमिथ्यात्वं, जाग्रत् प्रपञ्चस्य

॥ हरिः ॐ ॥

श्रीरामाय नमः

# अनुभाष्य गाम्भीर्यम्

श्रीर्देवी यस्य भार्या खगपतिगरुडो यस्य वाहः फणीन्द्रः
शय्या यस्याङ्कलग्ना विधिमुखविबुधा यस्य नाभौ सरोजे ।
यस्य श्रीमुक्तसङ्घैः परिचरणविधिश्शास्त्रतस्सुप्रसिद्ध
स्सोऽयं रामाख्यविष्णुर्मम दिशतु सुखं मङ्गलं मङ्गलानाम् ॥

तत्तद्भाष्यगतस्थैर्यैर्दोषाश्शाङ्करैः कथिताः ।
ते शाङ्करभाष्याब्धेर्दूरे तिष्ठन्ति न स्पृशन्त्येतम् ॥
इत्येतद्विशदयितुं मतिरेषा वै ममाधुना जाता ।
रघुमण्डनसंस्मरणं हेतुस्तस्यां ममास्ति सततं हि ॥
श्रीराममुख्यविदुषा भाष्यगाम्भीर्यवर्त्मना ।
भगवत्पादभाष्यार्थो रूप्यते तत्त्वदर्शिना ॥

'वैलक्षण्याच्च न स्वप्नादिवत्' इति सूत्रे भगवत्पादभाष्यं- वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पुनर्वैधर्म्यं बाधाबाधावि- ति ब्रूमः बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य नचैवं जागरि- तोपलब्धं स्तम्भादिकं कस्याञ्चिदवस्थायांबाध्यते-इति।तेन भाष्ये ण स्वप्नोपलब्धवस्तुनः बाध्यत्वरूपमिथ्यात्वं, जाग्रत् प्रपञ्चस्य

स्तम्भादेः बाध्यत्वरूपमिथ्यात्वाविरुद्धमबाध्यत्वं स्पष्टमु-क्तम्। नच-उक्तभाष्यं व्यवहारदशायां जाग्रत्प्रपञ्चस्याबाध्यत्वपरं, न मुक्तिदशायाम्-इति शङ्क्यं, 'कस्यांश्चिदवस्थायां बाध्यते इत्यत्र 'कस्यांश्चित्' इत्यवस्थाविशेषणस्वारस्येन अवस्थान्तरावच्छिन्नान्त-र्गतमुक्त्यवस्थायामपि बाध्यत्वप्रतिषेधात्। अन्यथा कस्यांश्चिदिति अवस्थाविशेषणवैयर्थ्यापत्तिः। नच मुक्तेरवस्थात्वाभावादुक्त-भाष्येण तत्र प्रपञ्चस्य न बाध्यत्वनिषेधसिद्धिः-इति शङ्क्यम् एवं मुक्तिफलानियमस्तदवस्थावधृतेः' इति सूत्रीयेण - 'ब्रह्मैव हि मुक्त्यवस्था'-इति भाष्येण मुक्तेरप्यवस्थात्वोक्तेः। नैवं जाग्रत् प्रपञ्चो बाध्यते इति सम्यानत्रयभाष्ये कुत्रापि स्पष्टवाक्यमस्ति, येन जाग्रत्प्रपञ्चस्य बाध्यत्वमपि भाष्यकृताम् अभिमतं स्यात्। बाध्यत्वसूचकं परम्'ऐन्द्रजालिकवत्,मरुमरीच्युदकादिवत्,स्वप्न-वत्'इत्यादिवाक्यं भाष्ये तत्र तत्र वर्तते:स्पष्टवाक्यविरोधे सूच-कवाक्यानां किञ्चित्किञ्चित्सादृश्यादिना नेयत्वम् उचितम्। अत एव समन्वयाधिकरणभाष्ये 'एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः, नहि ब्रह्मैकत्वज्ञानेनो-न्मथितस्य द्वैतविज्ञानस्य पुनस्सम्भवोऽस्तिइति'भाष्यम्;आरम्भ-णाधिकरणे'परमार्थावस्थायामीशित्रेशितव्यव्यवहाराभावः प्रदर्श्यते' इति भाष्यं;'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि'इति सूत्रे 'तयोः सुषुप्तिमुक्त्योः अन्यतरावस्थापेक्षमेतद्विशेषसंज्ञाभाववचनम्'इति भाष्यम्;एतैर्भाष्यैः ब्रह्मसाक्षात्कारात् मुक्त्यवस्थायां द्वैतविज्ञानस्य द्वैतव्यवहारस्य द्वैतविशेषविज्ञानस्य च नाशः कथितः ; नतु ब्रह्मज्ञानात् द्वैतस्य विनाशः। तस्मात् द्वैतस्य न



ज्ञानबाध्यत्वं भाष्यकृदभिमतं; किन्तु ब्रह्मज्ञानबाध्यद्वैतविज्ञान-व्यवहारविषयत्वमेव; अन्यथा उदाहृतबहुभाष्यार्थविरोधापत्तिः। किञ्च-'न पश्यो मृत्युं पश्यति' 'तत्केन कं पश्येत् तत्केन किं जि-घ्रेत्'इत्यादि 'यत्र नान्यत् पश्यति नान्यत् शृणोति'इत्यादिश्रुति-भिः द्वैतज्ञानादिरूपविज्ञानस्यैव आक्षेपः ब्रह्मज्ञानकाले क्रियते;न तु द्वैतस्य।नेह'नानास्ति किञ्चन'इत्यादिश्रुत्यानस्था ततोऽपित्याद्य-धिकरणीयेन भाष्येण द्वैतनिषेधस्तु अभ्युपगम्यचेमं व्यावहारिकं भोक्तृभोग्यादिलक्षणंविभागं'स्याल्लोकवत्'इतिपरिहारोऽभिहितः 'नत्वयंविभागःपरमार्थतोऽस्ति'इत्यारम्भणाधिकरणभाष्यरीत्या पारमार्थिकत्वाकारेण,तत्स्वरूपेणनिस्पष्टमवगम्यते।एतेनाविद्याप्र-त्युपस्थापितत्वाविद्याकृतत्वाविद्यकत्वाध्यस्तत्वमिथ्यात्वशब्दाः अविद्याख्यमायाविषयकभानविनाशकब्रह्मसाक्षात्कारनाश्यत्व-योग्यस्वविषयकभानादिव्यवहारकत्वपराः न तु ब्रह्मज्ञाननाश्य-श्यत्वाविद्याधीनोत्पत्तिकत्व अविद्यानाशनाश्यत्वपराः: उदाहृत-भाष्यानुसारात्, अविद्याद्यनादिभावानामुत्पत्त्यसम्भवाच्च। एवम् 'उपमर्दञ्च'इतिसूत्रीये-'क्रियाधिकारहेतोःक्रियाकारकफलादिल-क्षणस्य अविद्याकृतप्रपञ्चस्यस्वरूपोपमर्दमामनन्ति'इतिभाष्ये स्व-रूपमर्दमामनन्तीत्यनुक्त्वा उपशब्दसङ्घटनात् क्रियाधिकारहेतु-प्रपञ्चस्वरूपस्य सम्बन्ध्युपपदार्थसामीप्यवतः स्फुरणाभिवदन-रूपव्यवहारस्य ब्रह्मज्ञानात् मर्दनं, न तु तद्विषयप्रपञ्चस्येत्यवग-म्यते;अन्यथा उपेत्युपसर्गनिवेशवैयर्थ्यापत्तेः। नचायमुपशब्दः निरर्थकः,सम्भवति सार्थकत्वे निरर्थकत्वकल्पनानुपपत्तेः। न च धात्वर्थान्यथयतुत्वपरः, प्रकृते मृदिधात्वर्थमर्दनस्यैव विवक्षि-

स्तम्भादिः बाध्यत्वरूपमिथ्यात्वविरुद्धमबाध्यत्वं च स्पष्टमुक्तम्। नच-उक्तभाष्यं व्यवहारदशायां जाग्रत्प्रपञ्चस्याबाध्यत्वपरं, न मुक्तिदशायाम्-इति शङ्क्यं, 'कस्याञ्चिदवस्थायां बाध्यते' इत्यत्र 'कस्याञ्चित्' इत्यवस्थाविशेषणस्वारस्येन अवस्थान्तरावच्छिन्नान्तर्गतमुक्त्यवस्थायामपि बाध्यत्वप्रतिषेधात्। अन्यथा कस्याञ्चिदिति अवस्थाविशेषणवैयर्थ्यापत्तेः। नच मुक्तेरवस्थात्वाभावादुक्तभाष्येण तत्र प्रपञ्चस्य न बाध्यत्वनिषेधसिद्धिः इति शङ्क्यम् 'एवं मुक्तिफलानियमस्तदवस्थावधृतेः' इति सूत्रीयेण - अस्यैव हि मुक्त्यवस्था-इति भाष्येण मुक्तेरप्यवस्थात्वोक्तेः। नैवं जाग्रत्प्रपञ्चो बाध्यते इति प्रस्थानत्रयभाष्ये कुत्रापि स्पष्टवाक्यमस्ति, येन जाग्रत्प्रपञ्चस्य बाध्यत्वमपि भाष्यकृताम् अभिप्रेतं स्यात्। बाध्यत्वसूचकं परम् 'ऐन्द्रजालिकवत्, मरुमरीच्युदकादिवत्, स्वप्नवत्' इत्यादिवाक्यं भाष्ये तत्र तत्र वर्तते; स्पष्टवाक्यविरोधे सूचकवाक्यानां किञ्चित्किञ्चित्साहश्यादिना नेयत्वम् उचितम्। अत एव समन्वयाधिकरणभाष्ये 'एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः, नहि ब्रह्मैकत्वज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनस्सम्भवोऽस्तिइति' भाष्यम्; आरम्भणाधिकरणे 'परमार्थावस्थायामीशितेशितव्यव्यवहाराभावः प्रदर्श्यते' इति भाष्यं; 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति सूत्रे 'तयोः सुषुप्तिमुक्त्योः अन्यतरावस्थापेक्षमेतद्विशेषसंज्ञाभाववचनम्' इति भाष्यम्; एतैर्भाष्यैः ब्रह्मसाक्षात्कारात् मुक्त्यवस्थायां द्वैतविज्ञानस्य द्वैतव्यवहारस्य द्वैतविशेषविज्ञानस्य च नाशः कथितः ; नतु ब्रह्मज्ञानात् द्वैतस्य विनाशः। तस्मात् द्वैतस्य न

ज्ञानबाध्यत्वं भाष्यकृदभिमतं; किन्तु ब्रह्मज्ञानबाध्यद्वैतविज्ञान-
व्यवहारविषयत्वमेव; अन्यथा उदाहृतबहुभाष्यार्थविरोधापत्तिः।
किञ्च-'न पश्यो मृत्युं पश्यति' 'तत्केन कं पश्येत् तत्केन किं जि-
घ्रेत्' इत्यादि 'यत्र नान्यत् पश्यति नान्यत् शृणोति' इत्यादिश्रुति-
भिः द्वैतज्ञानादिरूपविज्ञानस्यैव आक्षेपः ब्रह्मज्ञानकाले क्रियते; न
तु द्वैतस्य। नेह 'नानास्ति किञ्चन' इत्यादिश्रुत्यानस्था ततोऽपित्याद्य
धिकरणीयेन भाष्येण द्वैतनिषेधस्तु अभ्युपगम्यचेमं व्यावहारिकं
भोक्तृभोग्यादिलक्षणंविभागं 'स्याल्लोकवत्' इतिपरिहारोऽभिहितः
'नत्वयंविभागःपरमार्थतोऽस्ति' इत्यारम्भणाधिकरणभाष्यरीत्या
पारमार्थिकत्वाकारेण, नस्वरूपेणनिस्पष्टमवगम्यते।एतेनाविद्याप्र-
त्युपस्थापितत्वाविद्याकृतत्वाविद्यकत्वाध्यस्तत्वमिथ्यात्वशब्दाः
अविद्याख्यमायाविषयकभानविनाशकब्रह्मसाक्षात्कारनाश्यत्व-
योग्यस्वविषयकभानादिव्यवहारकत्वपराः न तु ब्रह्मज्ञाननाश्य-
श्यत्वाविद्याधीनोत्पत्तिकत्व अविद्यानाशनाश्यत्वपराः; उदाहृत-
भाष्यानुसारात्, अविद्याद्यनादिभावानामुत्पत्त्यसम्भवाच्च। एवम्
'उपमर्दश्च' इतिसूत्रीये-'क्रियाधिकारहेत्वोःक्रियाकारकफलादिल-
क्षणस्य अविद्याकृतप्रपञ्चस्यस्वरूपोपमर्दमामनन्ति' इतिभाष्ये स्व-
रूपमर्दमामनन्तीत्यनुक्त्वा उपशब्दसङ्घटनात् क्रियाधिकारहेतु-
प्रपञ्चस्वरूपस्य सम्बन्ध्युपपदार्थसामीप्यवतः स्फुरणाभिवदन-
रूपव्यवहारस्य ब्रह्मज्ञानात् मर्दनं, न तु तद्विषयप्रपञ्चस्येत्यवग-
म्यते; अन्यथा उपेत्युपसर्गनिवेशवैयर्थ्यापत्तेः। नचायमुपशब्दः
निरर्थकः, सम्भवति सार्थकत्वे निरर्थकत्वकल्पनानुपपत्तेः। न च
धात्वर्थान्यथयतृत्वपरः, प्रकृते मृदिधात्वर्थमर्दनस्यैव विवक्षि-

तत्वात्। तस्मात् ज्ञानात् प्रपञ्चव्यवहारस्यैव लोपः, न तु जगत
इति सिद्धम्। एवं 'मायामात्रन्तु' इति सूत्रे च 'स्वप्ने ब्रह्मात्मत्व-
दर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति' इति भाष्ये ब्रह्म-
ज्ञानात् पूर्वं वियदादिप्रपञ्चस्य व्यवस्थितरूपत्वमुक्तं तत्त्ववि-
नाशी भवतीत्युक्तम् तेन ब्रह्मज्ञानोत्तरं प्रपञ्चस्याव्यवस्थितरूपत्वं
सिध्यति, न तु विनाशित्वम्। अव्यवस्थितरूपत्वं च ब्रह्मज्ञानविनाश्य
व्यवहारकत्वं, न तु विनाशित्वं; विनाशिनः अव्यवस्थितरूपत्वाद-
र्शनात्। एवं समन्वयसूत्रभाष्यधृताभ्यां 'गौणमिथ्यात्मनोऽसत्त्वे
पुत्रदेहादिबाधनात्। सद्ब्रह्मात्माहमस्मीति बोधे कार्यं कथं भवेत्।
देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्र-
माणं त्वात्मनिश्चयात्' इति गाथाभ्यामपि ब्रह्मज्ञानात् अहंममा-
भिमानरूपाविद्यायाः तदधीनात्मतादात्म्यात्मीयत्वविशिष्टरूपेण
देहपुत्रादेश्चासत्त्वं ब्रह्मज्ञानपर्यन्तं देहात्मप्रत्ययस्य तदधीनस्य मम
चक्षुर्मम श्रोत्रं पुत्रभार्यादिकमित्यादेः ममकारास्पदत्वेन लोक-
सिद्धस्य सम्बन्धाध्यासस्य च प्रमाणत्वञ्चोक्तं; न तु मूलमाया-
वियदादिप्रपञ्चस्य ब्रह्मज्ञाने सत्यसत्त्वं; ब्रह्मज्ञानात्पूर्वमेव सत्त्वं
चोक्तम्। एवं देहादिषु अनात्मसु अहमस्मीत्यात्मबुद्धिरविद्या ततत्
पूजनादौ रागः तत्परिभवादौ च द्वेषः तदुच्छेददर्शनात् भयं
मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः सन्ततः सर्वेषां नः प्रत्यक्षः
तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यमेतद्युभ्वाद्यायतन
मिति मुक्तोपसृप्यसूत्रभाष्ये ब्रह्मज्ञानेन अविद्यारूपभ्रमादिदो-
षस्यैव मोक्षणोक्त्या मूलमाया वेदादिप्रपञ्चस्य ब्रह्मज्ञाननिवर्त्य
त्वानुक्त्या च ज्ञानानिवर्त्यत्वमेवैति सिध्यति। 'एवमेतल्लक्ष-

णमध्यासं पण्डितानामपि मन्यन्ते अस्यानर्थहेतोः प्रहाणायात्मैक-
त्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इत्यध्यासभाष्यमपि
उक्तार्थसाधकं ग्राह्यम्॥ अध्यासस्य अहं ममाभिमानरूपस्य प-
ण्डितानामपीति मन्यन्ते इति पण्डितरीत्या अविद्यात्वोक्तया मूल-
मायादीनाम् अविद्यात्वं न पण्डिताभिमतमिति गम्यते। अस्यानर्थ-
हेतोः प्रहाणायेत्यनेनाध्यासरूपाविद्याया एव आत्मज्ञाननाश्य-
त्वं प्रतीयते। अत एव 'तदधीनत्वादर्थवत्' इति सूत्रीये 'मुक्तानां च पु-
नरनुत्पत्तिः विद्यया तस्याः जगत्प्रागवस्थायाः बीजशक्तेर्दाहात्;
अविद्यात्मिका हि सा बीजशक्तिः' इति भाष्ये अध्यासरूपाविद्या-
तादात्म्यवत्त्वरूपाविद्यात्मकत्वेनैव हेतुना बीजशक्तेर्दाह उक्तः;
न तु बीजशक्तित्वापरपर्यायमूलमायात्वेन। अविद्यात्मकत्वहेतु-
ना दाह इत्येतत् सूचनार्थं हिशब्दः, बहुव्रीहिद्योतककशब्दः च। ए-
वं समन्वयसूत्रभाष्ये-'श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञा-
नस्य फलं दर्शयन्ति॥ तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रं
दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा-
पायादपवर्गः' इति भाष्यग्रन्थे गौतमाभिमतगौरोहमित्यादिमि-
थ्याज्ञानरूपाध्यासस्य ज्ञाननिवर्त्यत्वांशे संमतिरुक्ता। अत एव
'कथं पुनः त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते—दै-
वीति देवस्य मम ईश्वरस्य विष्णोरित्यादिना तत्रैवं सति सर्वध-
र्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते;
ते मायामेतां सर्वभूतचित्तमोहिनीं तरन्ति-अतिक्रामन्ति संसारब-
न्धनात् मुच्यन्त इत्यर्थः' इत्यन्तेन दैवीह्येषेति श्लोकगीताभाष्येण-
मायायास्तरणमतिक्रमणमित्युक्तं; न तु विनाश इति। अत एव क्षरती-

ति क्षरो विनाशी एको राशिः, अपरः पुनः अक्षरः तद्विपरीतः भगवतो मायाशक्तिरिति 'द्वाविमौ पुरुषौ' इति गीताश्लोकभाष्येण मायायाः अक्षररूपविनाशराहित्यमुक्तमपि तेन ब्रह्मसाक्षात्कारेण मायाविनाशनस्योक्तस्य वियदादिप्रपञ्चस्य नाशस्योक्तप्रायत्वम्, उक्तभाष्याविरुद्धत्वात्, तद्भाष्यत्वाच्च। वाक्यानन्वयानिरूपणीय भाष्येण योऽहं ब्रह्मस्वरूपादिकं जगदात्मनोन्यत् स्थानत्वरूपेण त्व-त्पसद्भावं पश्यति, तं मिथ्यादर्शिनं नरं च मिथ्यादृष्टं जगत् परिक-ल्पितं इति भाष्येण स्थानत्वरूपेण जगत्स्थानत्वरूपबुद्धि-विषयत्वं मिथ्यात्वं जगत उक्तमपर्याप्तमिति पूर्वोक्तमिथ्यात्वेन दृष्ट-मपि मिथ्यात्वं भाष्याकाराभिमतं॥ स्थानत्वरूपेणत्वेनम पारमा-र्थिकत्वेनत्यक्त्वाऽऽख्यानरूपापत्तिश्च भाष्यकाराभिप्रायः॥श्रीः॥

अत्र कश्चित् शुक्तिरूप्यस्य शुक्तितत्त्वसाक्षात्कारे शुक्तिरूप्या-ध्यासनाशकाले नाशवत् ब्रह्मतत्त्वसाक्षात्कारे स्तम्भकुम्भादिवत् पवनमायादिप्रपञ्चविषयकज्ञानरूपाध्यासनाशे उक्तप्रपञ्चस्या-पि नाशावश्यकतेतिचेन्न: 'नहि जागरितोपलब्धं स्तम्भादिकं कस्यां-चिदवस्थायां बाध्यते' इतिपूर्वोदाहृतभाष्येण जाग्रत्प्रपञ्चस्य सर्वावस्थास्वपि ज्ञाननाश्यत्वरूप बाध्यत्वनिषेधेन जाग्रत्प्रपञ्च-विषयकज्ञानस्य बाध्यविषयकज्ञानस्वरूपाध्यासत्वासंभवेनशुक्ति-रूप्याध्यासतुल्यत्वाभावेन शुक्तिरूप्यस्य अध्यासनाशकाले अधिष्ठानज्ञाननाश्यत्ववत् जाग्रत्प्रपञ्चस्यवियन्मायापवनादे-रधिष्ठानब्रह्मसाक्षात्कारजन्यभाननाशकाले ब्रह्मज्ञाननाश्यत्वा-संभवात्। वियन्मायाद्यधिष्ठानत्वन्तु ब्रह्मणः वियन्मायाविषय-कज्ञानादिव्यवहारनाशजनकसाक्षात्कारविषयत्वमेव नतु वि-

यदाद्याकारेण परिणममानमायाविषयत्वम्, अनादेःमायावच्चित्
संबन्धस्याविशेषेणादेः मायापरिणामत्वासंभवेन तदाकारपरिण-
ममानमायाविषयत्वस्य वियन्मायाद्यधिष्ठानत्वस्य ब्रह्मण्यसंभवा
पत्तेः। नापि वियन्मायाभानाकारेण परिणममान मायाख्या-
विद्याविषयत्वं रूप्यभानाकारपरिणममाना विद्याविषयत्व-
रूपशुक्तिरूप्याधिष्ठानत्ववत् वियदाद्यधिष्ठानत्वं, वियदादिभा-
नस्य पूर्वोक्तरीत्या भ्रमत्वाभावेन तस्य मायाख्याविद्यावृत्ति-
त्वासंभवात्; अत एव वियन्मायादिप्रपञ्चस्य ब्रह्मण्यारोपितत्वं
ब्रह्मज्ञाननाश्यत्वयोग्यभानाविषयत्वमेव शुक्तिरूप्यवत् अधि-
ष्ठानाज्ञानपरिणामत्वम्। तस्मात् भगवत्पादसिद्धान्तरीत्या मुक्ति-
कालेऽपि प्रपञ्चसत्त्वात् नैकमुक्तौ सर्वमुक्त्यापत्तिः। भाष्यव्याख्या-
तृणां सिद्धान्तरीत्यापि एकस्यमुक्तौ सर्वात्मना प्रपञ्चस्यन नाशः,
किंतु प्रपञ्चैकदेशस्यैवेति वक्तव्यम्। तथाहि ब्रह्मविद्याभरणे 'अ-
विभागो वचनात्' इति सूत्रभाष्यविवरणप्रकरणे अयं ग्रन्थः नच
निरवशेषप्रलये संसारिशून्यतापत्तिः, अज्ञाननानात्वस्वीकारेण
तदीयतत्त्वज्ञानेन तदीयाज्ञाननिवृत्त्या तन्मूलकस्य प्रपञ्चैकदे-
शस्य नाशाभ्युपगमेऽपि अवशिष्ट प्रपञ्चसत्त्वे अनुपपत्त्यभावात्
–इति। विवरणानुसारिभाष्यरत्नप्रभाव्याख्याने 'एवमपि उपन्या
सात् पूर्वभावादविरोधं बादरायणः इति सूत्रभाष्यविवरणप्रकरणे
अयं ग्रन्थः-'अत्र केचिन्मुह्यन्ति अखण्डचिन्मात्रज्ञानात् मुक्तस्या-
ज्ञानाभावात् कुतः आज्ञानिकधर्मयोग इति; ते इत्थं बोधनीयाः
ये ईश्वरधर्माः, त एव चिदात्मनि मुक्ते जीवान्तरैः व्यवह्रियन्त-
इति। न च मूलाविद्यैक्यात् तन्नाशे कुतो जीवान्तरमिति वाच्यं,

न वयं तन्नाशे जीवान्तरं व्यवहारं ब्रूमः; किन्तु तदंशनाशेना-ज्ञानगतस्थाव्यानिमित्तशरीरद्वयाभिमानिनो मुक्तावस्थान्तरो-पाधिकाः जीवाः व्यवहरन्ति इति वदामः' इति। भामतीकृतस्तु 'प्र-तिजीवम् अज्ञानं भिन्नाभिन्नं तत्तदज्ञानकार्यभूताः प्रपञ्चाः अपि भि-न्ना एव; एकस्य मुक्तौ तदज्ञानस्य तत्कार्यप्रपञ्चस्य च नाशः; अज्ञा-नान्तरयुक्तास्तु सन्त्येव' इति वदन्ति सर्वथापि मुक्तौ प्रपञ्चानुवृ-त्त्यावश्यकतया भाष्यस्वारस्यात् एक एव प्रपञ्चः मुक्तावपि अवि-नाशी तिष्ठति; प्रपञ्चज्ञानमात्रं मुक्तिदशायां ब्रह्मज्ञानेन बाध्यते इति भाष्यकाराशयो व्याख्यातृभिः कुतस्त्यज्यते इति विमर्शे कृ-ते पाण्डित्यप्रख्यापनमेव हेतुरिति सिद्धम् ॥ श्रीः ॥

'सत्त्वाच्चापरस्य' इति आरम्भणाधिकरणसूत्रभाष्ये 'यथाच कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति;एवं कार्यमपि ज-गत् त्रिष्वपिकालेषु सत्त्वं न व्यभिचरति । एकञ्चपुनस्सत्त्वम् अतोऽप्यनन्यत्वं कारणात् कार्यस्य' इति ग्रन्थोऽस्ति । तेनच ग्रन्थेन त्रिकालवृत्तिसत्कारणब्रह्मगतं सत्त्वं तत्कार्यस्य जगत उक्तम् । ब्रह्मजगतोः कार्यकारणयोरेकसत्त्वं तयोरनन्य-त्वरूपमित्यप्युक्तम् । 'दृश्यते तु' इति सूत्रभाष्ये 'दृश्यते हि स-त्तालक्षणो ब्रह्मस्वभावः आकाशादिष्वनुवर्तमान इत्युक्तमिति' इति ग्रन्थोऽस्ति ; तेन ब्रह्मगतसत्त्वं प्रपञ्चे अनुवर्तत इत्युक्तम्। तदनन्यत्वाधिकरणभाष्ये अभ्युपगम्यचेमं व्यावहारिकं भो-क्तृभोग्यलक्षणं विभागं 'स्याल्लोकवत्' इति परिहारोऽभिहितः। 'नत्वयं विभागः परमार्थतोऽस्ति यस्मात्तयोः कार्यकारण-योरनन्यत्वमवगम्यते ' इति ग्रन्थेन प्रपञ्चस्य व्यावहारि-

कं सत्त्वं ब्रह्मणः पारमार्थिकं सत्त्वमुक्तम् तथाच ब्रह्मप्रपञ्चयो-
रनुगतमेकं सत्त्वं तयोश्च पृथक् पृथक् अपरं व्यावहारिक पा-
रमार्थिकभेदेन सत्त्वद्वयमिति व्यवस्था ॥

जागरितत्वन्तु प्रातिभासिकभिन्नत्वे सति सत्ताश्रयत्वम् 'न-
हि जागरितोपलब्धं स्तम्भादिकं कस्याञ्चिदवस्थायां बाध्यत इत्य-
त्र भाष्ये जागरितोपलब्धमित्येतावन्मात्रोक्तौ जाग्रत्कालीन-
शुक्तिरूप्यरज्जुसर्पादेरपि जागरितोपलब्धत्वेनाधिष्ठानज्ञानना-
श्यत्वरूपबाध्यत्वं न स्यादित्यनापत्तिस्तन्माभूदित्यर्थं स्तम्भा-
दिकमिति विशेषनिर्देशः कृतः अन्यथा तन्निर्देशवैफल्यापत्तेः।
स्तम्भादिकमिति प्रातिभासिकभिन्नत्वं द्योतयितुं व्यावहारिक-
सत्ताश्रयस्तम्भादिपदनिर्देशः। प्रातिभासिकरज्जुसर्पज्ञानाधी-
नभयकम्पादेस्तु ज्ञाननिवर्त्यरज्जुसर्पज्ञानाधीनत्वेऽपि न प्रातिभा-
सिकत्वम्, अधिष्ठानज्ञानेन रज्जुसर्पबाधेऽपि भयकम्पाद्यनुवृत्ति-
दर्शनात्। भयकम्पादेर्नाशस्तु नाधिष्ठानज्ञानात्, किन्तु कारणा-
न्तरात् मुद्गरपातादिना घटनाशवत् न रज्जुसर्पज्ञानरूपकारणना-
शात्।गौरोऽहमित्यादिमिथ्याज्ञानाधीनदोषाणां मिथ्याज्ञाननाशेन
नाशः.नाधिष्ठानात्मज्ञानेन।एतेन प्रातिभासिककार्यस्यापि अधि-
ष्ठानज्ञाननाश्यत्वमित्युक्तमपास्तम्. अधिष्ठानज्ञानसत्त्वेऽपि भय-
कम्पाद्यनुवृत्तिदर्शनात्, रज्जुसर्पतज्ज्ञानमात्रनाशदर्शनाच्च॥श्रीः॥

ओं ॥ मिथ्यात्वप्रतिभटं ब्रह्मासाधारणम् . अद्वैत्यभिमतं
पारमार्थिकत्वं न तावत् सर्वकालाबाध्यत्वं 'नैवं जागरितोपलब्धं
स्तम्भादिकं कस्याञ्चिदवस्थायां बाध्यते' इति भाष्येण तस्य

रणार्थं बुद्धिसंयोगो भाष्यकाराभिप्रेत इति स्पष्टं प्रतीयते । ननु उपाधिवियोगेऽपि स्वरूपसत्त्वात् नासत्त्वापादनमात्मनो युक्तमित्यत: असंसारित्वं नाम पक्षान्तरमाशङ्कनीयमिति शङ्कां.तथा हि स्वरूपनाशादसत्त्वापादनाशङ्काया अभावेऽपि:तत्त्वेनानालक्ष्यत्वात्: भवतु अनालक्ष्यत्वादसत्त्वप्रायोऽभिमत: तत्र असत्त्वासंसारित्वापादन-योग्यत्वाभावस्य सूत्रकृताकारानुपपत्तिः। एतेन अनालक्ष्यत्वादसत्त्वाभावभाष्यप्रमाणेन इत्युक्तिः केषाञ्चिदपास्ता.भाष्यकृतां प्रमादकल्पनापत्तेः। एवं च एव तु रूपानुस्मृतिशब्दविधिभ्यः' इति सूत्रीये 'एतस्मात् यावदेकोपाधिगता बन्धानुवृत्तिः,तावदेकजीव व्यवहारः,उपाध्यन्तरगतायान्तु बन्धानुवृत्तौ जीवान्तरव्यवहारः' इति भाष्ये एकोपाध्यनुवृत्तावेकजीवव्यवहार इत्याद्यनुक्त्वा 'यावदुपाधिगतबन्धानुवृत्तिस्तावत् एकजीवादिव्यवहारः' इत्युक्त्या बन्धानुवृत्तिशून्योपाध्यनुवृत्तिः यावत्तावच्छब्दाभ्यां संसूच्यते । बन्धानुवृत्तिशून्यता च बन्धनिवृत्तिरूपमुक्तावेवेति मुक्तिदशायामुपाध्यनुवृत्तिसिद्धिः। एवं 'तद्गुणसारत्वात्' इति सूत्रीये-'तस्याः बुद्धेः गुणाः तद्गुणाः इच्छाद्वेषः सुखं दुःखमित्यादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे स तद्गुणसारः. तस्य भावस्तद्गुणसारत्वं, नहि बुद्धेर्गुणैर्विना केवलस्यात्मनस्संसारित्वमस्ति' इति भाष्ये बुद्ध्युपाधिगतेच्छाद्वेषादिगुणानामेवात्मनस्संसारित्वे हेतुत्वोक्त्या केवलबुद्धेः संसारित्वहेतुत्वानुक्त्या चासंसारित्वाख्यमुक्तिदशायां संसारित्वप्रयोजकबुद्धिगुणानामेवाभावः, न बुद्धेरिति सिद्ध्या मुक्तिदशायां केवलबुद्ध्यनुवृत्तिः भाष्यकृदभिमतेति सिद्धम् यावदात्मभावित्वसूत्रभाष्ये—'यावदस्य सम्य-

गदर्शनेन संसारित्वं न निवर्तते, तावदेवास्य बुद्ध्या संयोगो न शाम्यति यावदेव चायं बुद्ध्युपाधिसम्बन्धः, तावदेवास्य जीवत्वं संसारित्वञ्च' इति ग्रन्थेन बुद्धिरूपोपाधिसंयोगशमनस्य संसारित्वनिवर्तकब्रह्मदर्शनाधीनत्वमुक्तम्। शाम्यमानबुद्धिसंयोगेऽन्त् बुद्धिगुणेच्छाद्वेषादिरेव [illegible]णगणानन्तसूत्रभाष्योक्तो ग्राह्यः. बुद्धिगुणेच्छाद्वेषादिर्बुद्धिगुणसंयोगयोः पृथानन्तसूत्रभाष्यगयोः संसारित्वहेतुत्वोक्तिसत्त्वाभिधानात्। अतो मुक्तौ नोपाधिलयः, किन्तु इच्छाद्वेषात्मकबुद्धिसंयोग एव लीयत इति निष्प्रत्यूहम्। एवम् 'एवं मुक्तिफलानियमस्तदवस्थावधृतेः' इति सूत्रभाष्ये 'ब्रह्मैव हि मुक्त्यवस्था' इत्युपक्रम्य 'न च तस्यामपि उत्कर्षनिकर्षात्मको विशेष उपपद्यते' इति ब्रह्मविद्यायामपि उत्कर्षनिकर्षाभावमुक्त्वा सगुणासु तु विद्यासु गुणावापोद्वापवशात् भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्।तथा हि लिङ्गदर्शनं 'तं यथा यथोपासते तथैव भवति' इति।नैव निर्गुणायां विद्यायां गुणाभावात्।तथा च स्मृतिः 'न हि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्' इतीति ग्रन्थगृहीतस्मृत्या निर्गुणब्रह्मविद्याल-भ्यमुक्त्यवस्थारूपब्रह्मातुल्यतानिरसनेन तुल्यत्वोक्त्या मुक्ता-वस्थारूपब्रह्मणां परस्परसादृश्यसिद्ध्यावश्यकतया मुक्त्यवस्था-यां मुक्तब्रह्मरूपमुक्त्यवस्थानां परस्परं भेदसिद्ध्यर्थमुपाधिसत्त्वं तत्प्रयुक्तभेदश्च भगवत्पादाभिमत इति निष्प्रत्यूहम्। कार्यब्रह्म-लोकप्रलयप्रत्यवस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनास्सन्तः त-दध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परं पदं प्रति-पद्यन्ते' इति 'कार्यात्यये तदध्यक्षेण' इतिसूत्रभाष्यस्मृतिरप्येतमर्थम-

नुमानानि। ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृता-
त्मानः प्रविशन्ति परं पदम्' इति स्मृतेश्चेति सूत्रभाष्याभ्यां परि-
शुद्धवैष्णवपदरूपैकप्रवेशाधिकर्तृणां मुक्तानां बहुत्वोक्त्या मु-
क्तिदशायामपि भेदावच्छेदकतया तत्प्रयोजकोपाधिरस्त्येवेति
सिद्धम्। वैष्णवस्थानस्यैव मुक्तभोग्यत्वं च सिद्धम्। 'अस्माकं तु रथ-
रूपकप्रसंगानुसारेण विष्णोरेव परमपदं दर्शयितुमयमुपन्यास
इत्यनवद्यम्' इति 'तत्त्ववचनाच्च' इति सूत्रभाष्ये विष्णोरेवेत्येवका-
रेण विष्णोरन्यदेवतान्तरपदस्य मुक्तप्राप्यत्वदर्शनं निवारितम्; अ-
न्यथा एवकारवैयर्थ्यापत्तिः। अंशाधिकरणे 'स्मरन्ति च' इति सूत्र-
भाष्यभूते 'कर्मात्ममात्रपरो योऽसौ मोक्षबन्धैस्समयुज्यते। स सप्तदश-
केनापि राशिना युज्यते पुनः' इति भारतवचने पुनरित्यनेन कर्मो-
परमरूपमोक्षानन्तरमपि सप्तदशकराशिरूपोपाधिसंबन्धोक्त्या मु-
क्तिदशायामपि औपाधिकभेदः सिध्यति 'राशिना युज्यते सदा' इ-
तिपाठे मुक्तावुपाध्यनुवृत्तिः स्फुटा। एवं भगवद्गीताभाष्ये 'न त्वे
वाहं जातु नासं न त्वं नेमे जनाधिपाः। नचैव न भविष्यामः
सर्वे वयमतः परम्' इति श्लोकविवरणे-'नचैव न भविष्यामः' किंतु
भविष्याम एव सर्वे वयमस्मात् देहविनाशात् उत्तरकालेऽपि त्रि-
ष्वपि कालेषु नित्यात्मस्वरूपेणेत्यर्थः। देह भेदानुवृत्त्या बहु-
वचनं नात्मभेदाभिप्रायेण' इति - भाष्ये, भविष्यत्कालान्तर्गतमु-
क्तिकालेऽपि भगवतोऽर्जुनस्य जनाधिपानाञ्च देहभेदानुवृत्त्युक्त्या
मोक्षकालेऽपि स्वरूपतो भेदाभावेऽपि-देहभेदौपाधिकात्मभेदसिद्धिः।
एवं प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति श्लोकस्य भाष्यं 'स-
प्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते-परापरे क्षेत्रक्षेत्रज्ञलक्षणे एतत्प्रकृ-

निरवयवयोर्नित्यत्वं कथं भूतानामपि स्वस्वपर्थोक्तेनेत्यत्र-प्रकृतिर्विप्रकृ-
तिः पुरुष ईश्वरस्य प्रकृती। प्रकृतिपुरुषौ तावुभावप्यनादी-तिवचने
आदिरहितयोस्तावनादी नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नि-
त्यत्वेन भवितुम्। प्रकृतिद्वयवत्त्वमेवहीश्वरस्येश्वरत्वं; याभ्यां प्रकृति-
भ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुः, ते द्वे प्रकृती अनादी इत्ये
उक्तमस्तितेन च भाष्येण ईश्वरवत् क्षेत्रज्ञस्यापि क्षेत्रज्ञत्वाकारेण
प्रागभावाप्रतियोगित्वरूपानादित्वं ध्वंसाप्रतियोगित्वरूपं नित्य-
त्वम् ईश्वरतुल्यमनादिकत्वं चोक्तम्। क्षेत्रज्ञस्य बुद्ध्युपाध्यवच्छिन्नचि-
द्रूपत्वात् बुद्ध्युपाधेः सादित्वविनाशित्वेऽसत्यत्वे च क्षेत्रज्ञस्या-
पि सादित्वविनाशित्वासत्यत्वापत्त्या तस्यानादित्वाविना-
शित्वसत्यत्वबोधकोक्तभाष्यविरोधो दुष्परिहर इति बुद्ध्यु-
पाधेरपि अनादित्वाविनाशित्वसत्यत्वानि उक्तभाष्येण सि-
ध्यन्ति। तस्मान्मुक्तिदशायामपि बुद्ध्युपाधिको जीवेश्वरभेदो
भगवत्पादाभिमत इति सिद्धम्। नचात्र क्षेत्रज्ञस्य आद्यन्तशून्यत्वेन
निर्दिष्टस्य उपाधिशून्यनिर्विशेषचैतन्यरूपत्वं तस्य ईश्वरप्रकृ-
तित्वनियाम्यत्वयोरुक्तयोरसंभवात्। एवम् 'अनादित्वान्नि-
र्गुणत्वात् परमात्मायमव्ययः' इति श्लोकस्य भाष्यम्-'एकस्यात्मनः
सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्ते इदमुच्यते - अनादीनि-अनादे-
र्भावो अनादित्वम् आदिः कारणं यत् यस्य नास्ति तदनादि।
यद्ध्यादिमत् तत् स्वेनात्मना व्येति-अयन्तु अनादित्वात् निरव-
यव इति कृत्वा न व्येतीत्यस्ति तेन भाष्येणानादिसामान्यस्य
स्वरूपेण नाशाभावोक्त्या जीवोपाधिबुद्धेरपि अनादेः स्वतो
अविनाशित्वसिध्या मुक्तिदशाभावित्वं तद्दशायामपि बुध्युपा -

धिकभेदस्यासिध्यति एवं परममुक्तावपि कालोस्त्येव-भोगेनत्वित
रेक्षपयित्वा संपद्यतइति सूत्रइतरे प्रारब्धकार्येपुण्यपापे उपभो-
गेन क्षपयित्वा ब्रह्मसंपद्यते तस्य तावदेवचिरंयावन्नविमोक्ष्ये अथ
संपत्स्यइतीति भगवत्पादभाष्याभ्यां तथात्वावगमात् सूत्रतत्
भाष्यगतेन त्वा प्रत्यये न प्रारब्धपुण्यपापक्षपणक्रिया ब्रह्मसं-
पत्तिरूपमुक्तिक्रिययोः पूर्वोत्तरकालवृत्तित्वावगमात् समानक-
र्तृकयोः पूर्वकालइतिस्मरणं । सूत्रविषयश्रुतौ यावन्तावदथशब्दैः
उक्तक्रिययोः कालसंबन्धावगमात् - कालसंबन्धेयवमुक्तितारिति
प्रारब्धकर्मक्षयोत्तरं मुक्तब्रह्मणोः संपत्तिक्रियायां कर्तृकर्मभा-
वनिर्देशात् तयोः मुक्तावपिभेदः कर्मकर्तृव्यपदेशाच्चेति सूत्रत-
द्भाष्यरीत्यासिध्यति - तादृशभेदसिध्यर्थं मुक्तावपि उपाधिसंब-
न्धो भगवत्पादाभिप्रेतइति निष्प्रत्यूहं । एवं ममैवांशो जीव-
लोकइति श्लोकस्यभाष्यं - यथाजलसूर्यकः सूर्यांशो जलनिमि
त्तापाये सूर्यमेवगत्वाननिवर्तते तथा अयमप्यंशः तेनैवात्म-
त्मना सङ्गच्छति यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः
आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निव-
र्तते इत्यस्ति तत्र भाष्ये दृष्टान्तभाग एव उपाधिनाश उक्तः न
दार्ष्टान्तिकभागेपि तस्मान्मुक्तावप्युपाधिसिद्धिः-एवं फलाध्या-
ये चतुर्थपादे एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायण
इति सूत्रं तस्य च पारमार्थिकचैतन्यमात्र स्वरूपाभ्युपगमेपि
व्यवहारापेक्षया पूर्वसिद्धस्याप्युपन्यासादिभ्योपगतस्य ब्राह्मस्य
ऐश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यत
इति भाष्यं । तस्मिन् भाष्ये पारमार्थिकचैतन्यमात्र स्वरूपाभ्यु-

पगमेपीत्यत्राभ्युपगमोत्तरापि शब्देन यद्यपि स्वाभाविकी चि-
न्मात्ररूपतामुक्तस्य नास्ति तथापि औडुलोमि श्रद्धानुसारेण
स्वाभाविकीं चिन्मात्रतां बादरायणोऽङ्गीकृतवानिति सर्वाथेन
साङ्ख्याधिकरणे अभ्युपगमेऽप्यर्थाभावादिति सूत्राभ्युपगमे-
पीति पदव्याख्यानरूपं स्वाभाविकी प्रधानस्य न सर्गानागति
स्थापितं । यद्यपि नाम भवेत श्रद्धामनुरुद्धयमानाः स्वाभावि-
कीमेव प्रधानस्य सर्गानमभ्युपगच्छेम तथापीति भाष्ये अभ्युप-
गमोत्तरापि शब्दरूपपदविवरणे अनभ्युपेताभ्युपगमस्यैव अ-
भ्युपगमोत्तरापि शब्देन स्पष्टं कथनात् - प्रकृतेऽपि अभ्युपगमे-
पीति भाष्यगत शब्दस्वारस्येन मुक्तस्य निर्विशेषचिन्मात्रत्वे
भाष्यकृतां परमतात्पर्याप्रतीतेः । उक्तभाष्ये मुक्तप्राप्य ऐश्वर्ये
ब्राह्मणस्येति अनेनविशेषणेन मुक्तब्रह्मो भयानुगत मैश्वर्यमव-
गम्यते । तेन च मुक्तब्रह्मणोः भेदोऽप्यवगम्यते । अभेदे तस्यै-
व तदीयमैश्वर्यमित्युक्ति वत् असाङ्गत्यापत्तेः ऐश्वर्यप्रतियोगित-
या ब्राह्मस्येति पदनिर्दिष्टब्रह्मणः ऐश्वर्यानुयोगिमुक्तस्य च भे-
दोवश्यं भाष्येव--परस्परभिन्नज्येष्ठ कनिष्ठोभयस्वामिकधनेक-
निष्ठस्येदं ज्येष्ठीयमिति वत् मुक्तैश्वर्ये ब्राह्मेणेति सूत्रब्राह्मस्यै-
वैश्वर्यस्येति-भाष्ययोः ब्राह्मत्वनिर्देशात् ब्रह्ममुक्तयोः भेदः
स्पुटः अन्यथा मुक्तब्रह्मणोर्भेदाभावे चैत्रीयमिदं चैत्रीयमित्य-
स्यापि संप्रतिपन्नत्वापत्तेः तस्मात् एवमप्युपपन्यासादिति सूत्र-
भगवत् पादभाष्यं मुक्तिदशायामपि मुक्तजीवब्रह्मणोः औपा-
धिकं भिन्नत्वमस्तीति सूचयतीत्यलम् ॥ श्रीः ॥

एतेन प्रलयसामान्यात् शक्त्यवशेषतामसक्तौ ब्रवीति अ-
विभागापत्तिरेवेति। कुतः? वचनात्। तथाहि कलाप्रलयमुक्त्वावक्ति-
भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवती
ति अविद्यानिमित्तानां कलानां विद्यानिमित्ते प्रलयेन सावशेष-
तोपपत्तिरिति अविभागो वचनादिति सूत्रभाष्यं षोडशकलान्तर्ग-
तमनसोऽपि निरवशेषलयं कथयति। ननु कथं जीवोपाधिमनसः मु-
क्तौ सत्त्वमिति यदास्तं प्रश्नोपनिषद्भाष्ये षोडशकलाप्रलयबोधक-
पदस्य अस्तं गच्छन्तीत्यस्य अदर्शनं गच्छन्तीति विवरणात् कला-
विषयकदर्शनसामान्याभावस्यैव निरवशेषलयरूपता भाषणात्स्व-
रूपनाशस्वीकारे ननु भाष्यविरोधापत्त्या त्वदुक्ताविभागोवच-
नादिति भाष्यमपि दर्शनाभावमेव कलानां निरवशेषलयइत्येतत्
परमेव। अन्यथा भाष्ययोः विरोधापत्तेः। अस्तं गच्छतीत्यत्र
अस्तंगमनस्य सूर्यः अस्तं गच्छतिइति वत् अदर्शनगमनार्थत्वस्यै-
व न्याय्यत्वात्। अन्यथा सूर्यास्तमयेऽपि सूर्यस्वरूपनाशापत्तेश्च।
ननु जीवब्रह्मणोः स्वाभाविकभेदपक्षापेक्षया तयोः मुक्तिदशाभा-
व्यौपाधिकभेदपक्षे को विशेष इति चेन्न स्वाभाविकभेदपक्षे द्वासु-
पर्णेत्यादिभेदशास्त्रं मुख्यं तत्त्वमस्याद्यभेदशास्त्रं जीवब्रह्मोभयानु-
गतधर्माभेदाभिप्रायमिति गौणं -मुक्तिदशाभाव्यौपाधिकभेदपक्षे-
तु संसारदशायामिव स्वरूपाभेदस्य मुक्तिदशायामपि सत्त्वात्
तत्त्वमस्याद्यभेदशास्त्रं मुख्यं - भेदशास्त्रं तु औपाधिकभेदविषय-
तया गौणमिति विशेषसत्त्वात् अत एव मत्कृतभगवत्पादभाष्य
गाम्भीर्यग्रन्थे चतुर्दशपृष्ठे पञ्चमपङ्क्तौ स्वाभाविकभेदे भगवत्पा-
दाभिमतत्वं तत्रैव विंशतितमे पृष्ठे प्रथमपङ्क्तौ औपाधिकभेदे भगव-

स्यादिविपरीतत्वमुक्तं नानुपपन्नमित्यर्थं - एवं मुक्तावस्थायां मुक्तः स्वीयसुखाश्रयः स्वीयसुखावभासकश्चाहङ्कारः मुक्तौ च स्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूतान्धेन केवलो नि-वृत्तस्वरूपो भवतीति यथाच तदाप्ययनमितिसूत्र भाष्ये अविद्यानिवृ-त्तिपरो। मुक्तस्य सुखित्वं सुखाश्रयत्वानिर्देशात्-सुखस्याज्ञानकल्प-ताहंवस्य भावत्वेन स्वीयसुखानुभवोऽपि मुक्तस्याहङ्कारयुक्तभा-व्यादेव प्रतीयते तस्मात् मुक्तौ भगवत्पादैरपि निरतिशयस्वीय सुखानुभवोऽस्तीति योऽस्य सुखानुभवस्य सदाभिव्यक्तस्य सि-द्धिरित्यलम् ॥

ब्रह्म च द्विविधं निर्विशेषं सविशेषञ्च। निर्विशेषत्वन्तु आ-विद्यकस्थूलत्वाणुत्वदीर्घत्वह्रस्वत्व शब्द स्पर्श रूप पाप जरा शो-कादिधर्मरहितत्वं - तत् धर्मसामान्यशून्यत्वं। सगुणत्वन्तु मनोम-यत्व प्राणशरीरत्वभारूपत्वाद्याविद्यकगुणयुक्तत्वं। निर्विशेषस्य ब्रह्मणः परमिति निर्गुणमिति प्रधानमिति ज्ञेयब्रह्मेति शुद्धमि-त्यादि संज्ञा। सविशेषब्रह्मणः अपरब्रह्मेति सगुणमिति शबलमिति अप्रधानब्रह्मेति सोपाधिकं ब्रह्मेति संज्ञा उपास्यब्रह्मेतिच-अत्रा-र्थे प्रमाणं किं? द्वे ब्रह्मणी परमपरञ्चेति चाहं द्वे-एतद्वै सत्यकामपर-श्चापरश्च ब्रह्मयदोंकार इत्यादिदर्शनात्-किंपुनः परं ब्रह्म किमप-रमिति - उच्यते! यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधेन अ-स्थूलादिशब्दैः ब्रह्म व्यपदिश्यते तत् परं तदेव यत्र नामरूपादि-विशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते मनोमयः प्राणशरी-रोभारूपइत्यादिशब्दैस्तदपरमिति। नन्वेवंसति अद्वितीयश्रुतिरूप-रुद्धयेतन·अविद्याकृतनामरूपोपाधिकतया परिहृतत्वादिति कार्य

वादिभिरित्यधिकरणान्तभगवत्पादभाष्यमेकं तथा वाजसनेयके श्रू-
यते-एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वदीर्घमि-
त्यादि-तथा आथर्वणे श्रूयते-अथ परा यया तदक्षरमधिगम्यते यत्त-
दद्रेश्यमग्राह्यमगोत्रमवर्णमित्यादि । तथैवान्यत्रापि विशेषनिरा-
करणेनाक्षरं ब्रह्म श्राव्यते इत्युपक्रमकं तथाचानन्दादयः प्रधान-
स्येत्यत्र व्याख्यातं तत्र विधिरूपाणि विशेषणानि चिन्तितानि
इह प्रतिषेधरूपाणीति विशेषणप्रपञ्चनार्थश्चायं चिन्ताभेद इत्यक्षर-
धियान्त्ववरोध इति सूत्रभाष्यं एकं ब्रह्मस्वरूपप्रतिपादनपरासु
श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वमित्येवं-
जातीयकाः प्रधानस्य ब्रह्मणो धर्माः सर्व सर्वत्र प्रतिपत्तव्याः। त-
स्मात् सार्वत्रिकत्वं ब्रह्मधर्माणामिति आनन्दादयः प्रधानस्ये-
ति सूत्रभाष्यञ्च प्रमाणम्। नचोदाहृतभाष्योक्तानां प्रधानज्ञेयनि-
र्विशेषब्रह्मगतानामुपलक्षणविधया निवेशश्शक्यः। भावरूपाणि
विशेषणानि चिन्तितानि। इह तु अभावरूपाणीत्यनुपदोदाहृतब्र-
ह्मगतविशेषाणां विशेषणत्वस्यकण्ठ तएवोक्तया उपलक्षणत्वायो-
गात्॥ आनन्दादिबोधकपदोपसंहारेऽपि तत्तत्पदबोद्ध्यानन्दत्वा-
देः विशेषणत्वानभ्युपगमे उक्तभाष्यविरोधः दुष्परिहरः॥ त-
स्मात् भगवत्पादमते आनन्दत्वविज्ञानघनत्वसर्वगतत्वसर्वा-
त्मत्वादिभावधर्मकं स्थूलत्वाद्याविद्यकधर्मरहितं ब्रह्मैव अपास्त-
समस्तविशेषनिर्विशेषनिर्गुणनिर्धर्मकज्ञेयब्रह्मप्रधानब्रह्मपरब्रह्मे-
तिशब्दैः व्यवह्रीयते - नतु सर्वात्मना गुणत्वावच्छिन्नगुणसामा-
न्याभाववत्-अनुपदोदाहृतभाष्यत्रयविरोधापत्तेः तदेवब्रृह्म मनो-

सप्रत्वधारूपत्वाद्याविषयकधर्मविशिष्टं सगुणमित्यादिशब्दैः व्यव-
ह्रियत इति सिद्धं श्रीः ॥

स्वापसर्वाप्ययोः सम्पत्सम्पत्त्यौ श्रुत्येन-यदा सुप्तः स्वप्नं न क-
श्चन पश्यति-अथास्मिन् प्राण एवैकधा भवति तदैनं वाक् स-
र्वैर्नामभिस्सहाप्येति । स यदा प्रतिबुध्यते एतस्मादात्मनस्सर्वे प्राणा
यथायतनं विप्रतिष्ठन्ते इति सम्पत्तिस्वरूपत्वाद्येति सूत्रभाष्यस्य
स्वारस्यात् दर्शनं दृष्टिः, अदर्शनं लयः, इति दृष्टिसृष्टिपक्षः कथितः इति
कश्चित्, तत्सत्यम्; अप्येति विप्रतिष्ठन्त इति शब्दाभ्यां सत्त्वप्रभव-
योरेवाभिधानेन अदर्शनदर्शनयोस्ताभ्याम् अनभिहितत्वात्-यथा
यतनमपि आयतनस्य गोलकादेः पूर्वसिद्धत्वनिर्देशेन तद्देशे
लयसृष्ट्यसंभवाच्च-किन्तु विषयेन्द्रिययोः कार्याक्षमत्वतत्क्षमत्वे-
लक्षणया अप्येति विप्रतिष्ठन्तेशब्दाभ्याम् अभिलप्येते इत्यतो दृ-
ष्टिसृष्टिपक्षस्य उक्तभाष्येणासिद्धिः - अन्यथा दृष्टिसृष्टिपक्षस्य उ-
क्तभाष्याभिप्रेतत्वेऽपि च दर्शनादर्शने वस्तुनः उत्पादनिरोधौ स्या-
ताम्, एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनश्शाब्दतत्त्वप्र-
सङ्ग इति उत्तरेतत् पादे च पूर्वनिरोधादिति सूत्रभाष्यविरोधाप-
त्तिः—श्रीः ॥

ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते इति बृह-
दारण्यकभाष्येण अविद्योपाधिविशिष्टं ब्रह्म संसारिशब्दवा-
च्यितजीव इति प्रतीयते—अविद्याया एकत्वात् तदुपाधिविशि-
ष्टं ब्रह्म संसारिपदवाच्यम् एकमिति एकजीववादस्सिद्ध्यतीति
न शङ्क्यं - तद्गुणसारत्वमूलभाष्ये तस्याः बुद्धेः गुणाः इ-
च्छाद्वेषादयः त एव सारः प्रधानमात्मनस्संसारित्व इत्यत्र

जीवोपाधिबुद्धेः एकवचनान्तशब्दनिर्दिष्टत्वेऽपि जात्येकत्वाभिप्रायेण प्रतिजीवं बुद्धिभेदेन नानाजीववादवत् स्वाविषयेति एकवचनस्यापि जात्यभिप्रायकत्वेन प्रतिजीवमविद्याभेदेन अविद्योपाधिको जीव इति पक्षेऽपि नानाजीवाभिप्रायकत्वस्य न्याय्यत्वात्—चैत्रमैत्रादीनां सर्वेषाम् अहं ब्रह्म न जानामीति परस्परं ब्रह्माज्ञानभेदस्यानुभवसिद्धत्वात् अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः॥ इति गीतावाक्येनाविद्याभेदावगमाच्च—स्वाविषयेति भाष्यस्थैकवचनस्य जात्यभिप्रायकत्वात् अन्यथा एकजीववादस्वीकारे यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः। उपाध्यन्तरे बन्धानुवृत्तौ तु जीवान्तरव्यवहार इत्यनेकजीववादस्य स्पष्टस्य स एव तु कर्मानुस्मृतीति सूत्रीयस्य भाष्यस्य विरोधापत्तिः। तस्मादेकजीववादो भगवत्पादानामत्यन्तानभिप्रेत इति सिद्धम्—श्रीः॥

ओम् एवं पाञ्चरात्रस्य प्रायेण वेदमूलकत्वस्य तदुक्तनारायणोत्कर्षतदाराधनादेः भगवत्पादाभिमतत्वम् इत्येतत् स्वीकार्यं। श्रुत्यनुसारिणी च स्मृतिः नः प्रमाणामिति स्थितिः। तत् कस्य हेतोरेषपक्षः प्रत्याचिख्यासित इत्यादेः योऽसौ नारायणो देवः परमात्मा परो व्यक्तात् प्रसिद्धः स आत्मानम् अनेकधा व्यूह्यावतिष्ठते इति न तन्निराक्रियते—अस्यार्थस्य स एकधा भवतीत्यादिश्रुतिशतसमधिगतत्वात्। यदपि तस्य भगवतः अभिगमनादिलक्षणम् आराधनमजस्रमनन्यचित्ततयाभिप्रे-

यते—न तन्निषिध्यते अस्यार्थस्य श्रुतिस्मृतिसर्वागमगतत्वादि-त्यन्तस्य उत्पत्त्यसंभवादिति सूत्रीयभाष्यस्य प्रामाण्यात्—श्रीः ॥

श्रीं ॥ पाशुपतशास्त्रं सर्वात्मना वेदबाह्यमेवेति भगवत्पा-दाभिप्रायः - सा चेयं वेदबाह्येश्वरकल्पना अनेकविधा इत्युप-क्रम्य माहेश्वरास्तु कार्यकारणयोगविधिदुःखान्ताः पञ्चपदा-र्थाः पशुपाशविमोक्षणाय पशुपतिना महेश्वरेण कथिता इत्यन्त-स्य पत्युरसामञ्जस्यादिति सूत्रभाष्यस्य स्वारस्यात्—श्रीः ॥

श्रीं—श्रीसालिग्रामावगाहनमेव भगवत्पादाभिमतं—न लिङ्गश्रीचक्रादेरवगाहनम् । जीवपुरे एवास्मिन् ब्रह्मसान्निहि-तमुपदिश्यते । यथा सालिग्रामे विष्णुस्सान्निहित इति तद्वदिति दहराधिकरणभाष्यस्य ईश्वरः तत्र हृदयपुण्डरीके निचाय्यो-द्रष्टव्य उपदिश्यते यथा सालिग्रामे हरिस्तत्रास्य बुद्धिविज्ञानं ग्राहकम् । सर्वगतोऽपीश्वरः तत्रोपास्यमानः प्रसीदतीत्यर्भकौ-कस्त्वसूत्रभाष्यस्य च स्वारस्यात् लिङ्गश्रीचक्रादेः श्रुति-स्मृतिसूत्राख्य प्रमाणव्याख्यानप्रस्थानत्रयभाष्ये अलेखनात् न च विष्णोरुक्तभाष्ययोः ब्रह्म प्रत्युपमानत्वोक्तया ब्रह्मवि-ष्णवोः भेदावश्यंभाव इति वाच्यम् । तर्हि उपमेयाच्छतगुणमु-पमानमित्यालङ्कारिकोक्त्या ब्रह्मापेक्षयापि उपमानभूतविष्णोः शतगुणाधिक्यापत्तेः । किं तु हृदयपुण्डरीकस्य ब्रह्मोपलब्धि-स्थानस्य उपमेयस्य उपमानतया सालिग्रामो निर्दिष्टः—अत एव सालिग्रामे यथाशब्दोत्तरत्वं न तु विष्णौ उक्तभाष्ययो-र्दृश्यते—न च तर्हि ब्रह्मोपलब्धिस्थानहृदयपुण्डरीकापेक्षया

सालिग्रामस्य शतगुणोत्कर्षः भगवत्पादाभिमतः स्यादिति वाच्यं। तथैव उक्तभाष्यस्वारस्येन भगवत्पादाभिप्रायस्य वज्रलेपायिततया कृतत्वात् अत एव हृदयकमले ब्रह्मोपासनापेक्षया सालिग्रामे भगवदाराधनं मुक्तिसाधनविषये शतगुणमुत्कृष्टमिति निष्प्रत्यूहम्। एवम् उपनिषद्भाष्यगीताभाष्ययोरपि बहुषु स्थलेषु सालिग्राम एव ब्रह्मोपलब्धिस्थानहृदयकमलापेक्षया ब्रह्मोपलब्धिसाधनमणत्वापेक्षया उपमानतया निर्दिष्टः। न हि कुत्रापि प्रमाणभाष्ये लिङ्गश्रीचक्रादिकं तदुपमानतया निर्दिष्टम्। एतेन सालिग्रामे यथा हरिरित्यत्र यथेश्वर इति, यथा सालिग्रामे विष्णुरित्यत्र सालिग्रामे ब्रह्मेति कुतो न निर्दिश्यत इति शङ्का परास्ता। उपमेयकोटिप्रविष्टेश्वरशब्दस्य ब्रह्मशब्दस्य च सामान्यस्य श्रीमन्नारायणे भगवति विष्णौ श्रीहरौ विशेषे पर्यवसानाय भगवदसाधारणहरिविष्णुशब्दयोः उपमानकोटिलेखनात् श्रीः ॥

परमेश्वरशब्दः विष्णोरेवासाधारणः, ईश्वरशब्दस्तु ईशनशीलमात्रसाधारणः अस्मिन्नर्थे अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोस्सन्धौ कृष्णद्वैपायनः संबभूवेति स्मरणं वसिष्ठश्च ब्रह्मणो मानसः पुत्रः निमिशापादपगतपूर्वदेहः पुनः ब्रह्मादेशात् मित्रावरुणाभ्यां संबभूवेति भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते—सनत्कुमारोऽपि ब्रह्मणः मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूवेति यावदधिकाराधिकरणे उपक्रमभाष्यम्। एवं अपान्तरतमःप्रभृतयोऽपीश्वराः प-

रमेश्वरेण तेषुतेष्वधिकारेषु नियुक्ता इति तदधिकरणोपरितन-
भाष्यग्रन्थमुल्लिख्य प्रमाणम्। अत्र उपक्रमभाष्ये अपान्तरतमोनि-
योजकत्वं विष्णोः उक्तं। हिरण्यगर्भद्वारकत्वमत्रावसिष्ठादिनियोजक
पक्षे हिरण्यगर्भस्य विष्णुपुत्रत्वात् द्वारत्वं युक्तम् अपान्तरतम आ-
दिनियोजकस्यैव विष्णोः उपरितनभाष्ये परमेश्वरशब्देन ग्रह-
णं कृत्वा अपान्तरतमः प्रभृतिनियोजकत्वम् उक्तम्—तथा च
एतयसूत्रकाथ प्रत्यभिज्ञया विष्णोरेव परमेश्वरत्वं नान्यस्येति
सिद्ध्यति। अपान्तरतमःप्रभृतयोऽधीश्वरा इति अपान्तरतमः प्रभृती-
नाम् ईश्वरत्व निर्देशात् ईश्वरशब्दः ईशनशील सामान्यपर इति
भाष्यकृदभिप्रायः। यत्तु केन चित् उपक्रमे विष्णोः अपान्तरत-
मोनियोजकत्वम् उक्तम्, परमेश्वरस्य तु अपान्तरतमःप्रभृति-
नियोजकत्वमित्यर्थभेदात् न विष्णोः परमेश्वरत्व सिद्धिरिति
जल्पितं। तन्न– अपान्तरतमःप्रभृतीत्यत्र आदिशब्दस्थानीयप्र-
भृतिशब्देन उपक्रमभाष्यनिर्दिष्टापान्तरतमोन्तर्गनिर्दिष्टवसिष्ठा-
दीनां पुरस्फूर्तिकत्वेन उपस्थितानां ग्रहीतव्यतया उभयोः
एकनियोजकत्वपरत्वावसायात् इति श्रीः॥

ओं–यज्ञीयपशुहिंसाया अप्यधर्मत्वं भाष्यकृदभिमतं शास्त्रा-
च्च हिंसा अनुग्रहात्मको ज्योतिष्टोमो धर्म इत्यवधारितम् ननु न
हिंस्यात् सर्वा भूतानीति शास्त्रमेव भूतविषयां हिंसामधर्म इत्य-
वगमयति–बाढमिति अशुद्धामिति चेन्न शब्दादिति सूत्रभाष्य
स्वारस्यात् यज्ञीयभूतहिंसायामधर्मत्वं नन्वित्यादिना श्रावयि-
त्वा बाढमिति हिंसायाः अधर्मत्वाङ्गीकारात्–बाढमित्यस्य अ-
ङ्गीकारार्थत्वं सुप्रसिद्धं—तदनन्तरम् उत्सर्गस्तु सः अयञ्च अ-

यवादो अग्नीषोमीयं पशुमालभेतइति उत्सर्गापवादयोश्च व्यवस्थित विषयत्वमिति तुष्यतु दुर्जन इति न्यायमनुसृत्य लिखितः वा- र्थमिति यज्ञीयहिंसायाः प्रथमम् अभ्युपगमस्वीकारात् ॥

श्रों-अतश्च संक्षेपमिमं शृणुध्वं नारायणस्सर्वमिदं पुराणः। स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः इति पुराण इति स्मृत्यनवकाशसूत्रभाष्ये-तेन भाष्येण सर्वज्ञत्वसर्वश- क्तियुतं जगदुत्पत्तिस्थितिलयकारणं परं ब्रह्म नारायण एवेति प्रतिपादनपरं पुराणवचनं धृतमस्ति नैव प्रस्थानत्रयभाष्ये शिवादिदेवतान्तरं जगत्कारणं ब्रह्मेत्यर्थपरपुराणवचनं धृतम- स्ति - तस्मात् भगवत्पादभाष्यसिद्धान्तरीत्या शिवादिदेवतान्त- रस्य जगत्कारणब्रह्मपरत्वसमर्थकपुराणवचनम् अर्थवाद इति वा प्रशंसामात्रमिति वा सिध्यतीत्यलम् ।

श्रोः विधिशिवदुर्गालक्ष्मीसरस्वत्यादिकं भगवतः श्री- कृष्णस्य विभूतिरित्यर्थे अहमेवाक्षयः कालो धाताहं विश्वतोमुखः, रुद्राणां शंकरश्चास्मि, कीर्तिश्रीर्वाक्चनारीणां स्मृतिर्मेधाधृतिःक्षमा। इत्यादिविभूत्यध्यायगतश्लोक तदीयभगवत्पादभाष्याणिद्रष्टव्या- नि-कीर्तिशब्दः लक्ष्मीसरस्वतीवाचकश्रीवाक्छब्दसमभिव्याहा- रात् नारीणामिति स्त्रीव्यक्तिसमूहात् पृथक्करणरूपनिर्धारणवि- भक्तिबलाच्च दुर्गाख्यस्त्रीव्यक्तिपरः- प्रधानपुरुषेश्वरइति भगव- न्नामसहस्रान्तर्गतनामविवरणे भगवत्पादीयसहस्रनामभाष्ये प्र धानं प्रकृतिः माया अविद्या गौरी श्रीरित्यादिपुरुषः जीवः तयो- रीश्वर इति ग्रन्थेन दुर्गालक्ष्मीसरस्वतीनां भगवन्नियम्यत्वोक्त्या-

पुरुषशब्दितजीवात् पृथक् निर्देशेन च श्रीभगवदपेक्षया न्यूनत्वं जीवकोटिघटितत्वञ्चावगम्यते - एतेन दुर्गाद्यवतारीयाः पुंरूपा- ह्लामर्षविशेषो विष्णुः तदंशजः इति च शैवागमतदनुसारिपुराणव- चनात् सिध्यतीति शाक्तवेदबाह्यमतोऽपि परास्तः। उक्तरीत्या श्री- कृतत्रिकालसत्यसत्यनाथभाष्यविरुद्धत्वेन भगवत्पादसिद्धान्तविरु- द्धत्वात् - वैष्णवीं लोके इष्टपादयन्तीति मन्त्रसश्रुतौ विष्णुजन्यत्व- स्य दुर्गायामुक्तविरुद्धत्वाच्च - हरिवंशे श्रीकृष्णावतारप्रकरणे विष्णोश्शरीरजां निद्रां विष्णोर्निदेशकारिणीम् इति भाषादेकथाः विष्णुनिद्राशक्तित्वविष्णुकिंकरीत्वोक्तेश्च वेदबाह्यशैवागमतदनु- सारिपुराणवचनानां प्रामाण्यस्य वेदभ्रष्टान् प्रत्येव वक्तव्य- त्वाच्च ॥

श्रीं मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु- मच्चित्तो भव मद्भक्तो भव मद्यजनो भव मां नम- स्कुरु-नमस्कारं प्रयत्न कुरु-एवं वर्तमानः वासुदेव एव न्यस्तार्पित- साध्यसाधनप्रयोजनः मामेव एष्यसि आगमिष्यसि सत्यन्ते त- व प्रतिजाने प्रतिज्ञां करोमि भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा-भगव- च्छरणैकपरायणो भवेदितिवाक्यार्थइति अष्टादशाध्यायगतमन्म- नाभवेदितिश्लोकभगवत्पादभाष्ये भगवद्भक्तत्वादियुक्तस्य भ- गवच्छरणैकप्रधानस्य साध्यसमर्पणं साधनसमर्पणं प्रयोजना- ख्यफलसमर्पणं वासुदेवे भगवति क्रियमाणमेतद्देहावसाने भग- वत्प्राप्तिसाधनमित्युक्तम्। तथाच वासुदेवे भगवतिसाध्यसाधन- प्रयोजनसमर्पणं शरणागतिः मोक्षहेतुरिति भगवत्पादाभिप्रायो- ऽवगम्यते-सर्वधर्मान्परित्यज्येति श्लोकभाष्ये उपक्रमे कर्मयोग-

निष्ठायाः परमरहस्यमीश्वरशरणताम् उपसंहृत्येति भगवच्छरणा-
गतेः परमरहस्यत्वमुक्तमवगम्यते श्रीः ॥

स्मृत्यनवकाशसूत्रभाष्ये ममान्तरात्मा तव च ये चान्ये देहि-
संज्ञकाः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्।
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति भूतेषु
स्वैरचारी यथासुखम्। इति ग्रन्थेन सूतं मोक्षधर्मीयनारायणीय-
रुद्रंप्रतिकृतचतुर्मुखकर्तृकवचनं यत् तेन रुद्रस्य चतुर्मुखवत् दे-
हिसंज्ञकत्वं भगवत्पादाभिपन्नमिति सिद्धमिति॥ अहं त्वं ये चान्ये
ब्राह्मणाः तत्र गन्तव्यमित्युक्तौ - अहंत्वमथयोरपि ब्राह्मणत्व-
मिद्धवत् ॥ श्रीः ॥

पुरुषसूक्तप्रतिपाद्यस्य परब्रह्मत्वं श्रीकृष्णत्वं च भगवत्-
पादाभिपन्नं भूतादिपादव्यपदेशोपपत्तेश्चेति सूत्रभाष्ये अनया
ऋचा स्वरसेन ब्रह्मैवाभिधीयते-पादोस्य सर्वा भूतानि त्रिपादस्या-
मृतं दिवीति सर्वात्मत्वोक्तेः पुंसूक्तेऽपीयमृक् ब्रह्मपरत्व समाम्ना-
यते - स्मृतिश्च ब्रह्मणः एवंरूपतां दर्शयति - विष्टभ्याहमिदं कृत्स्न-
मेकांशेन स्थितो जगदितीति ग्रन्थेन पुंसूक्तभगवद्गीताविषयकेण
पुंसूक्तोक्तपरब्रह्मणः श्रीकृष्णरूपत्वोक्तेः। ओंश्री ओं मुण्डकभा-
ष्ये अनश्नन्नन्यो अभिचाकशीतीत्यस्यभाष्यम् - अनश्नन्नन्यः
इतरः ईश्वरः नित्यशुद्धबुद्धमुक्तस्वभावस्सत्त्वोपाधिकः नाश्नाति-
प्रेरयिताह्यसावित्यस्ति-तेन च जीवात्मद्वितीयस्य सर्वज्ञस्य ईश्व-
रस्यसत्वोपाधिकत्वमुक्तम्।प्रेरयितृत्वञ्च भगवद्गीताद्वादशाध्याय-
प्रथमश्लोकभाष्ये-ज्ञानबलैश्वर्यशक्तिमत्सत्त्वोपाधेः कृष्णस्य तवे-
ति भाष्यं।। तेन भाष्येण कृष्णस्य सत्वोपाधिकत्वमुक्तं । तथाच

उक्तभाष्याभ्यां सत्वोपाधिकः नित्यशुद्धबुद्धमुक्तस्वभावस्सर्वेश्व
ईश्वरः श्रीकृष्ण एवेति सिद्धान्ति-सर्वेश्वरस्य सत्वोपाधिकत्वो-
क्त्या श्रीकृष्णव्यतिरिक्तः सर्वेश्वरो नास्तीति सिद्धं-रजोगु-
णावच्छिन्नचैतन्यं तमोगुणावच्छिन्नचैतन्यं गुणत्रयावच्छिन्नचैत-
न्यं वा सर्वेश्वर इति प्रस्थानत्रयभाष्ये कुत्राप्यनुक्ततया न तेषां
सर्वेश्वरत्वापत्तिरिति निष्प्रत्यूहं ॥ श्रीः ॥

पद्मपादाचार्यैः भगवत्पादशिष्याग्रेसरैः विरचितभाष्य-
व्याख्यायां पञ्चपादिकायाम् अयं प्राथमिकपङ्क्तिश्लोकः। यस्या-
स्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम्। अनुग्रमुन्मृदि-
तकालकलाञ्छनं विना विनायकमपूर्वशंकरमिति भगवत्पादानाम्-
अपूर्वशंकरत्वद्योतकविशेषणैः कैलासवासिनस्त्वीशशंकरस्य च-
यानि भोगिसंपदादिरूपाणि वाह्यचिह्नानि तद्राहित्यम् अभोगिपरि-
वारसंपदमित्यादिपदैः प्रतिपाद्यते - तत्र निरस्तभूतिमिति द्वितीयं
विशेषणं तेनाभिक्रमणाधिकरणसिद्धसन्दंशन्यायेन प्रथमतृतीया-
दिविशेषणवत् भूतिशब्दितं भस्मधारणरूपं यत् कैलासवासिशं-
करस्य वाह्यचिह्नं तदभावः कथ्यते-भगवत्पादेषु आन्तरनिरति -
शयज्ञानाणिमाद्यैश्वर्यसत्त्वेन न तन्निरासः निरस्तभूतिमिति विशे-
षणार्थः—तस्मात् ऊर्ध्वपुण्ड्रमेव गोपीचन्दनेन भगवत्पादाना -
मिति सिद्धं ॥

यदीयपदपङ्कजं सुरभिगन्धसंमूर्च्छितं शशाङ्क इव शीतलं-
निजजनैस्सदालोकितम्।मुनीन्द्रहृदि भावितं मुनिजनैस्सदापूजितं
तदीयपदपङ्कजे मम मनस्सदा वर्तताम्।। यच्छब्दार्थो रामः।सच्चि-
दानन्दघनं निर्गुणं शुद्धं ब्रह्म पारमार्थिकसत्ताकं तदन्यत्सर्वंविय-

दादिप्रपञ्चजातं सर्वज्ञत्वादिगुणजातंच व्यावहारिकसत्ताकं पार-
मार्थिकसत्ताशून्यं-पारमार्थिकसत्ताचकालत्रयेप्यविनाशित्वं व्या-
वहारिकसत्ताच स्वरूपेण वा अवस्थारूपेणवा विनाशित्वयोग्यत्वं
शुद्धं ब्रह्मतु मायोपाधिकं सत् सगुणब्रह्मेति शबलब्रह्मेति चोच्यते
तच्च नारायणादिशब्दवाच्यं स्वसमानसत्ताकसर्वज्ञत्वसर्वशक्ति-
त्वादिकल्याणगुणकम् एवं तदेवशुद्धं ब्रह्मान्तःकरणोपाधिकं सत्
जीव इत्युच्यते-शबलब्रह्मोपाधिमायासत्वरजस्तमोगुणानां सा-
म्यावस्था आवरणविक्षेपशक्तिमती अनादिः। तस्या एकत्वात्
विभुत्वाच्च तदुपाधिकशबलब्रह्मणोऽप्येकत्वं विभुत्वमनादित्वंच-
जीवोपाध्यन्तःकरणस्य बुध्याख्यस्य बहुत्वात् अणुत्वादनादि-
त्वाच्च तदुपाधिकजीवस्य बहुत्वमणुत्वमनादित्वंच औपाधिकमेव
जीवशबलयोः भेदः शबलगतं सर्वज्ञत्वादिमायोपाध्यधीनमेवशब-
लस्यदिव्यमङ्गलविग्रहोपि भगवतानुग्रहार्थे स्वेच्छयास्वीकृतः सा-
क्षान्मायापरिणामएव नतुभौतिकः जीवस्यबुद्ध्युपाधिप्रयुक्तमेव -
कर्तृत्वभोक्तृत्वविषयसुखित्वदुःखित्वपुण्यपापतदधीनब्राह्मणा -
दिशरीरवत्त्व सदसत्कर्माचरणभगवदाराधन वेदान्तश्रवणमनन-
निदिध्यासन ब्रह्मापरोक्षादिकं सर्वम्।ब्रह्मापरोक्षः शुद्धब्रह्मैक्य-
साक्षात्कारः मोक्षश्च सर्वदुःखशून्यत्वोपलक्षित शुद्धब्रह्मात्मनाव-
स्थितिः। ब्रह्मसाक्षात्कारे सति प्रपञ्चज्ञानप्रपञ्चशब्दाभिलपनरू-
पव्यवहारबाधः तादृशबाधाविष्टत्वमेव प्रपञ्चस्य मिथ्यात्वं नतु
स्वरूपबाधः अन्यथा एकमुक्तिकाले संसारबंधतद्धेतुप्रपञ्चस्य
बाधापत्त्या सर्वेषां मुक्त्यापत्तेः वियदादिप्रपञ्चे मायापरिणामि-
कारणं शबलं ब्रह्म मायाविशिष्टत्वेन रूपेण उपादानकारणं

निमित्तकारणं च शबलेश्वरोपासनापरिपाकेन अर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिः अपवर्गः जीवस्य आनन्दत्वदुःखत्वादिकम् उपाधिभूत बुद्धि धर्म एव। जीवे तु कर्तृत्वादिक एव जीवोपाधेः मुक्तिदशायां नाशकथनं तु आपेक्षिकस्थायित्वेनपूर्वपक्षोक्तम् शुद्धब्रह्मणो निर्गुणत्वं च आविशेषकत्वप्रयुक्तमेव। आनन्दादिगुणस्य शुद्धेऽपि सत्त्वधर्मित्वं पूर्वपक्षोक्तम् इत्यद्वैतवादिकारिकाशय सङ्ग्रहः द्वैताद्वैतप्रभेदाभिमतमुभयविधत्वादिस्तत्त्वमाहुः द्वैतं द्वेधा विभक्तं जडाजडविषयि सत्यमव्यक्तकाले अन्त्यं सन्ध्यवधारितत्व प्रथममुभयथा तत्र जीवशभेदाभिन्नाभूतिविभिन्नविग्रहः जडाजडादिषु केचिदाहुः इति वेदान्ताचार्यकृतविशिष्टाद्वैतसङ्ग्रहः—स्वातन्त्र्यात्तद्विरुद्धान्यितमुभयविधं तादृशमत्त्वमाहुः स्वातन्त्र्यं नामस्याविकाणोपेत इदमखिलं चिज्जड विष्णुतन्त्रम् स्वातन्त्र्याधारभूतो हरिरयममितमसेवक एवाग्र आसीदित्यादिशास्त्रसङ्घात् पर इह भगवान एक एवाद्वितीय इति द्वैतमतसङ्ग्रहः सगुणब्रह्मणश्शबलस्य विष्णुत्वमित्येवंरूपप्रधानांशे द्वैतद्वैतविशिष्टाद्वैतिमतत्रयं समानमेव। सगुणब्रह्मजीवयोः निरतिशयज्ञानानन्दादिगुणवत्त्व तद्विरुद्धगुणवत्त्व रूपप्रधानांशे मतत्रयं समानमेव। भेदस्य औपाधिकत्व स्वाभाविकत्व वैलक्षण्येऽपि सगुणब्रह्मजीवभेदत्वेन रूपेण मुख्यभेदांशे मतत्रयं समानमेव। मुक्तिदशायामपि यस्मात्सगुणब्रह्मणः मुक्तस्य भेदः द्वैतिविशिष्टाद्वैतिभ्यां स्वीकृतः। तस्मात्सगुणब्रह्मणः अद्वैतिभिरपि मुक्ते भेदस्य स्वीकृतत्वात्—मुक्तस्य निर्गुणब्रह्मैक्यमेव अद्वैतिभिः स्वीकृतं नतु सगुणब्रह्मैक्यं मुक्तौ

आनन्दानुभवः प्रमातृस्वरूपमुक्तात्मकएवेति द्वैतिमतम्। अद्वैतिम-
तेऽपि आनन्दानुभवः मुक्तस्वरूपएव-विशिष्टाद्वैतिमतेतु मुक्तस्व-
रूपाद्भिन्नः धर्मभूतज्ञानप्रसारविशेषइतिवैलक्षण्येऽपि मुक्तावान-
न्दानुभवे प्रधानांशे मतत्रयेऽपि साम्यमेव-अद्वैतिमते ब्रह्मणि पा-
रमार्थिकसत्ता तद्भिन्नप्रपञ्चे व्यावहारिकसत्तेति द्वैविध्यं-विशिष्टा-
द्वैतिमते ब्रह्मणि निरुपाधिकसत्ता तद्भिन्नप्रपञ्चे सोपाधिकसत्ते-
ति सत्ताद्वैविध्यं। द्वैतिमते स्वरूपप्रवृत्तिप्रमितिरूपसत्तात्रये परा-
नपेक्षत्वं स्वतन्त्रत्वं स्वरूपप्रवृत्तिप्रमितिरूपसत्तात्रये पराप-
क्षत्वम् अस्वतन्त्रत्वम् इति मध्वाचार्यकृततत्त्वविवेकतत्त्वसङ्ख्यान-
रूपग्रन्थरीत्या ब्रह्मणः परानपेक्षसत्ता तद्भिन्नप्रपञ्चस्य परा-
पेक्षसत्तेति सत्ताद्वैविध्यमस्ति। एवं ब्रह्मसत्ताप्रपञ्चसत्तयोः
किञ्चित्किञ्चित् वैलक्षण्ये सत्यपि ब्रह्मसत्तापेक्षया न्यूना
प्रपञ्चसत्ता प्रपञ्चसत्तापेक्षया उत्कृष्टा ब्रह्मसत्ता इत्येवं री-
त्या सत्तास्वीकाररूपप्रधानांशे मतत्रयं सममेव · ब्रह्मभिन्न-
प्रपञ्चस्य स्वरूपेण वा अवस्थारूपेण वा विनाशयोग्यत्वं
मतत्रयेऽपि समानमेव - मुक्तिदशायां संसारहेतुप्राकृतप्रपञ्च -
ज्ञानतदभिलपनरूपव्यवहारबाधाः तदाक्रान्तत्वं च प्रप -
ञ्चस्येति एतत् मतत्रयेऽपि समानमेव-तस्मात् प्रधानांशे म-
तत्रयस्यापि साम्यात् उपसर्जनांशेषु वैलक्षण्येऽपि मतत्रयं
निर्मत्सराणाम् उपादेयमेव - अत एव अप्पय्यदीक्षितैरपि न्या-
यमुक्तावल्याख्यग्रन्थे—आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्र श्री -
कण्ठयोगिपदवीरदवीयसीर्नः-आचार्यपादसरणिश्चविविच्य बो -
द्धुं संगृह्यते मतचतुष्टयसारलेशइति श्लोकेन द्वैताद्वैतविशिष्टाद्वैत-

प्रतानामुपादेयत्वमुक्तं सङ्गच्छते अन्यथा उपसर्जनांशवैलक्ष-ण्येन प्रधानांशावैलक्षण्येऽपि स्वस्वमतं स्वस्य स्वस्य अनुपादे-यमेव स्यात् अद्वैतिमतप्रविष्टवाचस्पतिविवरणपक्षयोः अव-च्छिन्नवादप्रतिबिम्बवादनानाजीववादप्रपञ्चभेदप्रपञ्चद्वयवैलक्ष-ण्यं दृश्यते । विशिष्टाद्वैतमतप्रविष्टतेङ्गलवडकलयोः श्रीविभुत्वा-दिविषयेषु बहुषु वैलक्षण्यं दृश्यते माध्वमतप्रविष्ट उत्तरादिम-ठ व्यासरायमठप्रविष्टयोः वादिराजस्वामिनः वास्तवशब्दविषये रक्तमूर्त्तिकाधारणविषये श्रवणद्वादशीव्रतानुष्ठानविषये जय-न्तीपारणाविषये च वैलक्षण्यं दृश्यते एवंरूपवैलक्षण्येऽपि प्रधानांशसाम्यात् उपादेयत्वे तत्तन्मतस्य द्वैताद्वैतविशिष्टाद्वैत प-तत्रयेऽपि उपादेयत्वं निर्मत्सराणामपि सुधियां विदां कुर्वन्तु॥

ओं इदं तु बोध्यं दहराधिकरणे उत्तराच्चेदाविर्भूतस्वरू-पस्त्विति सूत्रभाष्ये यत्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रति-षेधति सूत्रकारः नासम्भवादित्यादिना । तत्रायमभिप्रायः आ-त्मैकत्वप्रतिपादनपरवाक्यैः न्यायोपेतैः द्वैतवादप्रतिषेधैश्च पर मात्मनो जीवादन्यत्वं द्रढयति।जीवस्यतुनपरस्मादन्यत्वं प्रतिप-पादयिषति किन्त्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदं एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेनप्रवृत्ताः कर्मविधयोन विरुध्यन्त इतीति भाष्यं तत्र ब्रह्मणि जीवादन्यत्वं द्रढयतीत्य-नेन जीवप्रतियोगिकभेदः ब्रह्मणि दृढ इत्युक्तं। दार्ढ्यं च भेद-स्य शैथिल्ययोग्यत्वाभावः।दृढं बध्नातीत्यादौ तथादर्शनात् लोक-प्रसिद्धेश्च। तथा च भेदशास्त्रं जीवप्रतियोगिकभेदाभिप्रायकम् ।

अभेदशास्त्रं भेदनिषेधकशास्त्रं च ब्रह्मणनियोगिकजीवानुयो-
गिकभेदाभावाभिप्रायिकं जीवस्य तु न परस्मादन्यत्वं प्रतिपि-
पादयिषतीत्यादिना प्रकृतग्रन्थस्थेन तथाभिधानात्। न च मु-
क्तिदशायां जीवत्वं नश्यतीति शङ्क्यं। तद्दशायां जीवत्वस्यैवाभा-
वे जीवत्वविशिष्टप्रतियोगिकभेदस्य शैथिल्यापत्त्या जीवभेदस्य
ब्रह्मणि दार्ढ्योक्तिरसंगता स्यात् दार्ढ्यं चोक्तं परमात्मनो
जीवादन्यत्वं द्रढयतीति जीवत्वस्य कल्पितत्वन्तु मुक्तौ अभा-
सपानत्वमेव। न तु स्वरूपनाशः उक्तानुपपत्तेरेव। अत एव उदाहृ-
तभाष्ये स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविध-
यो न विरुध्यन्त इत्युक्तं कर्तृत्वादीनामपि स्वाभाविकत्वम्-
श्रीः ॥

तामष्टादशधा दृष्ट्वा शङ्करस्सूतसंहिताम्। चक्रे शारीरकं भाष्यं
सर्वश्रुतिमनोहरमिति अभियुक्तोक्तौ भाष्यं सर्वश्रुतिमनोहरमित्य-
नुक्त्वा भाष्यस्य शारीरकम् इति विशेषणदानात् शारीरकभाष्य-
स्यैव सर्वश्रुतिमनोहरत्वम् उपनिषद्भाष्यगीताभाष्ययोस्तु न तथे-
त्यवगम्यते-सूतसंहितां दृष्ट्वा कृतस्य भाष्यस्य सूतसंहिता मनोहर-
मिति विशेषणस्य वक्तव्यत्वेन श्रुतिमनोहरमित्युक्त्या श्रुत्याभि-
प्रायरीत्यैव भाष्यं कृतम्। नतुसूतसंहिताभिप्रायेणेतिगम्यते-सूतसं-
हितादर्शनंतु सूतसंहितार्थनिरासार्थं बहुधा परमतंदृष्ट्वा शास्त्रमनो-
हरं स्वमतं रचयतीत्यादौ निरासार्थं परमतस्य दर्शनवत् किञ्च
सूतसंहितापदस्य सूतकृता संहितेति व्युत्पत्तिः कार्या। न तु सूत-
प्रोक्ता संहितेति। तथा सति अष्टादशपुराणानामपि सूतप्रो-

कत्वात् भागवतादीनामपि सूतसंहितात्वापत्तेः। नापि सूतस्य प्रतिपादिका। संहिता सूतसंहिता शंकरसंहितेतिवत् इति शङ्क्यं, सूतस्य तद्ग्रन्थे शंकरसंहितायां शंकरस्येव अप्रतिपादनात् सूतकर्तृकैव संहितेति सिद्धम्। अत एव संकरजातित्वात् सूतसंहितायाः भगवत्पादभाष्ये कुत्रापि न लेखनं, यथा ज्ञानवासिष्ठस्य काश्मीरस्य वासिष्ठभट्टकृतस्य भगवत्पादैरनुदाहृतत्वं तद्वदित्यलम्॥

अनुभाष्यगाम्भीर्यं समाप्तम् ॥

अश्वत्थनारायणपूर्वक नारायणनामकस्य सर्वेषु ।
तन्त्रेषु स्वातन्त्र्यं श्रीपतिविष्णोः कलाभिसंयोगात् ॥
तत्सुतपुत्रो विद्वान् शास्त्री श्रीरामसुब्बेति ख्यातः ।
तेनेदं रचितं तच्छांकरभाष्यार्थगुम्फनं यत्र ॥

सर्वतन्त्रस्वतन्त्रभगवत्कलांश श्रीमदश्वत्थनारायणशास्त्रिणां पौत्रेण
रामसुब्बशास्त्रिणा विरचितमनुभाष्यगांभीर्यं
समाप्तम्.
श्रीः.

सामोर्स्पर्द्दग्रामख्यातः कान्त्याः पश्चादेशे रम्ये। नत्ग्राम-
स्थानपिमानत्माम्भ्रौदीच्यारख्यास्तेषांमध्ये।।रघुनाथाख्यभूदेव-
स्त्वासीच्छास्त्रार्थतत्त्ववित्। पुत्रस्तस्य चतुस्तन्त्री रामभद्राख्यप-
ण्डितः ।। तस्य पुत्रद्वयं ख्यातं तत्रैकोग्याख्यभूसुरः। सतुविद्वान्
सर्वशास्त्रेतुऋजीन्द्रपुरेवसत् ।। तस्यपुत्रत्रयंजातं मद्धश्वमोण्णाख्य
पण्डितः । यस्यशिष्यप्रशिष्यैस्तु भूषितंमण्डलम्भुवः ।। तस्यपुत्रो
हरेरंश साक्षान्नारायणाह्वयः । अश्वत्थपूर्वपदकः प्रसिद्धः पृथि-
वीतले ।। पितुस्सकाशात्संलब्धसर्वशास्त्रार्थतत्त्ववित् । स्वपि-
तुर्निकटे शास्त्रमद्वैतं ज्ञातुमागतात् ।। अहोबिलाख्यविदुषो महा-
भाष्यंगृहीतवान् । स्वयंप्रकाशप्रमुखा यतिवर्या अपिस्वयम्। यस्मा-
दधीतवेदान्तत्रितया ख्यातपण्डिताः।।माध्वारामानुजीयाश्च श्री-
शांकरमतानुगाः । स्वस्वसिद्धान्तसंसिद्ध ग्रन्थतत्त्वबुभुत्सया ।।
यस्यच्छात्रत्वमापद्य पाण्डित्येप्रथिताभवन् । पातञ्जलेमहाभाष्ये
गादाधर्यांचवार्तिके।। भट्टपादकृतेभाष्ये शबरस्वामिनाकृते। ख-
ण्डदेवकृतौ भाट्टदीपिकायांचकौस्तुभे ।। ब्रह्मानन्दसरस्वत्यार
चिताचन्द्रिकाभिधा । कृतिस्तस्यान्दोड्डयार्यरचितेचण्डमारुते ।।
तत्तन्मतस्थभाष्येषु तथा विद्यान्तरेषु च—ज्ञानं यस्य म-
हान्तोपि शास्त्रिणस्त्र्यंबकादयः ।। ज्ञात्वाश्चर्यंमुदंचैव प्रा-
प्ताइतिहिशुश्रुमः । सीतापतेःपादपद्मे यन्मनोलिस्सदास्थितः ।।
इतिश्रुतंमयातस्य पुत्रः श्रीरामशंकरः । धर्मशास्त्रेतथापूर्वतन्त्रेबु-
द्धिमवापसः । तस्यपुत्रत्रयंतत्र ज्येष्ठोनारायणाह्वयः ।। श्रुति-

स्मृतिनिदर्शेषु सम्यक्छ्रद्धामुपगन्तिवतः। कोऽदण्डपूर्वकैर्वर्णैः नाऽन्ना-गर्भार्तानिवश्रुतः । कोनिष्ठापन्नपमन्त्र गापमुर्तिर्वातीनिवश्रुतः ॥ शि-वगापायसंज्ञानां देशिकानांमहात्मनां । समादानमवगाम्भो गाप-दाम्यगमानुभूः ॥ तेनायं रचितो ग्रन्थो लोकानुग्रहकाम्यया ॥ श्री-रस्तु — श्रीमद्भगवत्कल्याणनगर श्रीमत्स्वामिनारायणशास्त्रिणां पौत्रेण श्रीरामसुब्रह्मण्यशास्त्रिणा विरचितं मनुभाष्यगांभीर्यं समाप्तं ॥ हरिः ओं ॥

इदन्तु बोध्यम् ॥ स आत्मा तत्त्वमसीत्यत्र तत्पदं स गुणब्रह्मपरं त्वंपदं शारीरत्वविशिष्टपरम् । वाक्यन्तु शारीर-त्वविशिष्टस्य स गुणब्रह्माभेदपरम् । न तु शुद्धस्वरूपाभेदप-रम् । अभेदज्ञानफलञ्च शारीरस्य भोक्तृत्वनिवृत्तिरित्यत्र शा-स्त्रञ्च तत्त्वमसीत्यपहतपाप्मत्वादि विशेषणम् ॥ ब्रह्मशारीरस्या-त्मत्वेनोपदिशत शारीरस्यैव तावत् उपभोक्तृत्वं वारयतीति संभोगप्राप्तिसूत्रभाष्यं प्रमाणम्। नहीश्वरस्य संसार्यात्मत्वं प्रति-पाद्यते इत्यभ्युपगच्छामः। किन्तर्हि संसारिणः संसारित्वापोहे-नेश्वरात्मत्वं प्रतिपादयिषितमिति। एवं च सति अद्वैतेश्वरस्या-पहतपाप्मत्वादिगुणता । विपरीतगुणतातु ईश्वरस्य मिथ्येति व्यवतिष्ठत इति आत्मेति तूपगच्छन्तीति सूत्रभाष्यञ्च उक्तार्थमेव –द्रढयति–ईश्वरीयापहतपाप्मत्वादिगुणतायाः तद्विपरीतगुणत्व-मात्रमिथ्यात्वोक्त्या सत्यत्वदृढीकारात् ईश्वरमिथ्यात्वतद्गुणापह-तपाप्मत्वादिगुणमिथ्यात्ववादी नव्यः परास्तः ॥ शारीरस्योप-भोक्तृत्वरूप सुखदुःखभोक्तृत्वात्मकसंसारित्वापोहोक्त्या शारी-

रस्यैवेत्येवकारेण च शारीरत्वं शरीरतादात्म्यभ्रमराहित्यरूपा-
शरीरत्वं गतस्यापि अस्तीति सिद्धमिति॥ एतेन निर्विशेषब्रह्मता-
दात्म्यमेव जीवस्वरूपस्य तत्त्वमसिवाक्यार्थ इति वादः परा-
स्तः, उक्तभाष्यद्वयविरुद्धत्वात् ॥ ननु शारीरत्वस्य तत्त्वमसि-
वाक्यार्थज्ञानानिवर्त्यत्वे ईश्वरशारीरयोः मुक्तिकाले भेदावश्य-
कतया तत्त्वमसीति जीवेश्वरयोरभेदोक्तिर्विरुद्धेति चेन्न भेदस्य
शारीरप्रतियोगिकत्वेनाभेदस्येश्वरप्रतियोगिकत्वेन भेदाभेदयो-
रेकप्रतियोगिकत्वाभावेनाविरोधात्। तदुक्तं दहराधिकरणे 'उत्तरा-
च्चेदाविर्भूतस्वरूपस्तु' इतिसूत्रभाष्ये यदिदं परमेश्वरवाक्ये जीव-
माशङ्क्य प्रतिषेधति सूत्रकारः नासम्भवादित्यादिना तत्रायमभि-
प्रायः-नित्यशुद्धमुक्तसत्यस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे अरू-
पे परमात्मनि तद्विपरीतं जैवं रूपं व्योमनि तलमलिनतादिवत् प-
रिकल्पितं तदात्मैकत्वप्रतिपादनपरैः न्यायोपेतैः द्वैतवादप्रतिषेधै-
श्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति ॥ जीवस्य तु
न परस्मादन्यत्वं प्रतिपिपादयिषति, किन्तु अविद्याकल्पितं लोक-
प्रसिद्धमिति । किञ्च-एतद्भाष्ये जैवं रूपं व्योमनीव तलमलिन-
तादिपरिकल्पितमित्यत्र जैवरूपं नजीवत्वं, किन्तु कर्तृ-
भोक्तृरागद्वेषादिरूपमेव । एतद्भाष्याव्यवहितपूर्वस्मिन् त-
स्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरा-
गद्वेषादिदोषकलुषितमनेकानर्थयोगितद्विलयनेन तद्विपरीतम-
पहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यतइति
भाष्ये कर्तृभोक्त्रादिरूपस्यैव जैवस्य कल्पितत्वविनाशित्वयोः
प्रतिपादनात् । जीवत्वस्य कल्पितत्वविनाशित्वयोः अप्रतिपा-

दनाच ब्रह्मणि जीवान्यत्वदार्ढ्योपाधिनः जीवोपाधिबुद्धेः नित्यत्वं सूचयति ॥ श्रीः ॥

मनुष्योऽहं ब्राह्मणोऽहं काणोऽहमस्मीति शरीरेन्द्रियसंघाते अहं शब्दितात्मतादात्म्य बुद्धिरध्यासः। अहमर्थात्मा त्वं पदार्थः, तत्पदार्थोऽपि आत्मैव। तथाच तत्त्वमसि वाक्यम् आत्मनि आत्मतादात्म्यबोधकं, नतु जीवे ईश्वरस्य वा निर्विशेषचितो वा तादात्म्यबोधकमित्यत्र अपवादो नाम यत्र कस्मिन्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टायाः मिथ्याबुद्धेः निवर्तिका भवति यथा देहेन्द्रियसंघाते आत्मबुद्धिः आत्मन्येव आत्मबुद्ध्या निवर्तते । पश्चाद्भाविन्या तत्त्वमसीत्यनया यथार्थबुद्ध्या निवर्तत इति 'व्याप्तेश्च समञ्जस' मिति सूत्रभाष्यं प्रमाणं ॥ श्रीः ॥

तत्पदं सर्वज्ञब्रह्मपरं-तस्य ब्रह्मणः पूर्वप्रकृतत्वात् - तस्य असधात्वर्थसत्तायामन्वयः।तस्याख्यातार्थाश्रयत्वे।तस्य प्रथमान्तत्वंपदार्थे। तथाच ब्रह्मवृत्तिसत्ताश्रयत्ववान् त्वमिति वाक्यार्थावगतेः तत्त्वमसीति सामानाधिकरण्यावगतब्रह्मजीवाभेदः जीवब्रह्मोभयानुगतैकसत्ताकत्वमिति भाष्यकाराभिप्रायः-यथा-कारणं ब्रह्म त्रिषुकालेषु सत्त्वं नव्यभिचरति एवं कार्यं जगत् त्रिषुकालेषु सत्त्वं नव्यभिचरति।एकञ्च पुनस्सत्त्वं अतोऽप्यनन्यत्वं कारणात् कार्यस्येति'सत्त्वाच्चापरस्ये'ति सूत्रभाष्यस्वारस्यात् कार्यकारणानन्यत्वे अतश्शब्देन एकसत्ताकत्वस्य हेतुत्वनिर्देशात्

तत्त्वमसीत्यत्र शब्दस्वरसरीत्या जीवब्रह्मानुगतैकसत्त्वैव ऐक्य-मितिसिद्धम् ॥ श्रीः ॥

तत्त्वमसीति सामानाधिकरण्यावसेयाभेदः जीवे ब्रह्मावि-भागएव। अविभक्तएव परेणात्मना मुक्तोवतिष्ठते। कुतः? दृष्टत्वात् तथाहि तत्त्वमस्यहं ब्रह्मास्मियत्र नान्यत् पश्यति नतुतद्द्वितीयम-स्तिननोन्यत् विभक्तं यत् पश्येत् इत्येवमादीनिवाक्यानि अवि-भागेनैव परमात्मानंदर्शयन्ति। यथादर्शनमेव फलं युक्तं, तत्क्रतु-न्यायात्। यथोदकं शुद्धेशुद्धमासिक्तं तादृगेवभवति एवं मुनेर्वि-जानत आत्माभवति गौतमेति एवमादीनि मुक्तस्वरूपनिरूपण-पराणि वाक्यानि अविभागमेव दर्शयन्तीत्याद्यविभागोवचना-दिति सूत्रभाष्यप्रामाण्यात्, नह्यत्र अविभागशब्दः अभेदपरः। तर्हि भवद्रीत्याविभागशब्दस्य भेदपरत्वस्य वक्तव्यतया एत-द्भाष्यगृहीतं नतु तद्द्वितीयमस्ति ततोन्यत् पश्येत् यद्विभक्तमितिवि-भक्तत्वान्यत्वयोः पृथगुपादानं नस्यात्, एकस्मिन्वाक्येघटक-लशवत् पर्यायत्वात् -- तस्मात् विभागोविश्लेषएव तदभावोऽ-विभागइति सिद्ध्यातत्त्वमसीति संश्लेषविशेषएवबोध्यते। नतु स्वरूपैक्यम्। एवंब्रह्मणि द्वितीयनिषेधश्रुतिवाक्यं विश्लेषमेवप्रप-ञ्चस्य निषेधतीति उक्तभाष्यादेव सिद्ध्यति। एवं जीवेशयोः पर-स्परभेदाविरुद्धाः तत्त्वमस्यर्थाः सूत्रभाष्यस्थाः सन्तीत्यलं श्रीः॥

छान्दोग्यभगवत्पादभाष्ये - ऐतदात्म्यमेतत् सदात्मा यस्य सर्वस्यतदेतदात्मा। तस्यभावः ऐतदात्म्यम्। एतेनसदाख्ये-नात्मना आत्मवत् सर्वमिदंजगत् तदेवसदाख्यं कारणं सत्यंपर-

पार्थसत्-अतस्य एवात्मा जगतः सत्यरूपम् आत्मशब्दस्य निरुप-पदस्य प्रत्यगात्मनि गवादिशब्दवत् निरूढत्वात् अतः तत् सत् त्वम् असि श्वेतकेतो इत्यादि ग्रन्थः तेन च कारणत्वावि-शिष्टस्य कारणस्य परमार्थसत्यत्वमुक्तं । कारणस्य ब्रह्मणो मिथ्यात्वे तदसंगतं स्यात् । सत् पदार्थज्ञानजननाश्रयत्वापत्ति तत्त्वमस्यर्थश्चोक्तः । सतोऽभयानुगतैकमतेनेति भाष्याभिप्रा-यः ॥ श्रीः ॥

स्वाभाविकी ज्ञानबलक्रियाचेति श्रुतौ ज्ञानबलाभ्यां सहि-ताक्रियेतिविग्रहः । बलमवशक्तिः क्रिया सामर्थ्यविशेषः तेषां षड्के आदिभूतस्य स्वाभाविकीतिपदोक्तं स्वाभाविकत्वं याव-द्व्यक्तयवतिष्ठमानत्वात्स्वाश्रयनिष्ठात्यन्ताभावाप्रतियोगित्वल-क्षणस्वाश्रयसमानत्यरूपमित्यङ्गीकर्तव्यं भगवत्पादपदानुसारि-भिः। ईक्षत्यधिकरणे यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्य मस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् अनित्यत्वे हि ज्ञानस्य कदा-चित् जानाति कदाचित् नजानातीति असर्वज्ञत्वमपि स्यात् । नासौज्ञाननित्यत्वे दोषोऽस्तीतिभाष्यमुक्तार्थं प्रमाणमवगन्तव्यं नह्यत्रभाष्ये ज्ञानं विषयावभासनक्षमं स्वरूपज्ञानं यस्य हीति षष्ठ्या स्वरूपसंबन्धित्वोक्तेः ॥

धर्मभूतज्ञानमेव तस्य च नित्यत्वं सोपपत्तिकमुपपादितम्। एतेन बलक्रिययोरपि स्वाभाविकत्वमुपपादितप्रायं ॥ श्रीः ॥

अन्तस्तद्धर्माधिकरणे यत्र निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रमशब्दस्पर्शमरूपमव्ययमित्या-

दीतिभाष्यं तत्र पारमेश्वरस्य शुद्धस्य निरस्तसर्वविशेषमिति निर्विशेषत्वमुक्तं ॥

दहराधिकरणे उत्तराच्चेदाविर्भूतस्वरूप इतिसूत्रे अपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विज्ञयाप्रतिपद्यतइति भाष्यं तत्र पारमेश्वरशब्देन अन्तस्तद्धर्माधिकरणपारमेश्वरशब्दनिर्दिष्टशुद्धं ब्रह्मानूद्य अपहतपाप्मत्वादिगुणकमिति विशेषणेन अपहतपाप्मत्वादिसत्यसंकल्पत्वान्तप्रजापतिवाक्योक्तगुणकत्वमुक्तं । तथाचोभयोभाष्ययोर्विरोधाय अपहतपाप्मत्वादिगुणातिरिक्ताविद्यकगुणनिषेधपरमेव निरस्तसर्वविशेषमिति अन्तस्तद्धर्माधिकरणीयपदंनेयं,नतु सर्वधर्मनिषेधपरम्,उदाहृतभाष्यविरोधापत्तेः । अद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता, विपरीतगुणतातु ईश्वरस्यमिथ्येति आत्मेतितूपगच्छन्तीति सूत्रभाष्ये अपहतपाप्मत्वादिगुणानाम् ईश्वरीयाणां तद्विपरीतगुणमिथ्यात्वोक्तिद्वारा दृढीकृतसत्यत्वानां विरोधापत्तेश्च ॥ श्रीः ॥

कार्यं बादरिरित्यधिकरणे - किं द्वे ब्रह्मणी-बाढं द्वे परमपरञ्चेति श्रुतिप्रामाण्यात् यत्र अस्थूलादिवाक्यैः आविद्यकधर्मनिषेधेनोपदिश्यते तत् परमितिभाष्येण आविद्यकधर्माणामेव शास्त्रे ब्रह्मणि प्रतिषेधइत्यवगम्यते - नतु आनन्दादिकल्याणगुणानाम् आनन्दादयःप्रधानस्येतिसूत्रोक्तानां नवाक्षरधियामितिसूत्रोक्तानाम् अस्थूलत्वादि हेयगुणाभावानां तेषामपिगुणानां ब्रह्मणि निषेधस्वीकारे तत्रतु भावरूपाणि विशेषणानि चिन्तितानि अत्रतु - अभावरूपाणि विशेषणानीति अक्षराधियामिति

सूत्रभाष्यविरोधापत्तेः । तत्र आनन्दादयः प्रधानस्येत्यत्र अत्र अक्षरधियामितिसूत्रे इतिटीका ॥

नत्र आनन्दादिगुणानाम् अस्थूलत्वादिगुणानाञ्च उपलक्षणतया स्वीकारइतिशङ्क्यं भाष्ये भावरूपाणि विशेषणानि अभावरूपाणि विशेषणानीति कण्ठतएव तेषां विशेषणत्वोक्तेः तस्मात् शुद्धं ब्रह्मापि अनादिविधकस्वाभाविकापहतपाप्मत्वादि आनन्दादि अस्थूलत्वाद्यनेकगुणयुक्तमेव - निषेधशास्त्रमाविध-कगुण निषेधपरं- ज्ञानबलक्रियाः ब्रह्मणि शुद्धे स्वाभाविक्य इति निष्प्रत्यूहं भगवत्पादमते शुद्धं ब्रह्मस्वस्मिन् अतिशयाधायकधर्मरहितं केनापि स्वस्मिन् अतिशयाधानासंभवात् निर्गुणशब्दोपि ब्रह्मण्यतिशयाधायकधर्मशून्यपरः, नतु धर्मसामान्यशून्यपर इत्यस्मिन्नर्थे - एकोदेवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षस्सर्वभूताधिवासस्साक्षीचेता केवलो निर्गुणश्चेति सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्ध-मितिचतौमन्त्रौ अनाधेयातिशयतां नित्यशुद्धताञ्च ब्रह्मणोदर्शयतइति समन्वयसूत्रभगवत्पादभाष्यं प्रमाणम् । अनाधेयातिशयतामितिपदेन अनाधेयः अनुत्पाद्यः अतिशयोयस्यसः अनाधेयातिशयस्तस्यभावः अनाधेयातिशयतेत्यर्थकथनेन अतिशयाधायकधर्मशून्यत्वस्य ब्रह्मण्यवबोधनात् - प्रथममन्त्रः अतिशयाधायकधर्मशून्य आत्मा इत्यर्थकः द्वितीयः नित्यशुद्धत्वाभिप्रायकइति भाष्यकाराभिप्रायः । श्वेताश्वतरभाष्ये एकोदेवइति मन्त्रघटकनिर्गुणशब्दः सत्त्वादिगुणत्रयरहित इत्यर्थकतया व्या-

ख्यानः। पञ्चपादिकायां पद्मपादाचार्यैः आनन्दोविषयानु-
भवो नित्यत्वंचेतिसन्तिधर्माः अपृथक्त्वेपिचैतन्यात् पृथगिवा-
वभासन्तइत्युक्तम् आनन्दादिधर्माणां ब्रह्मणि सत्त्वमस्ति-तेषां
ब्रह्मपृथक्त्वं नास्ति पृथक्त्वन्तुमिथ्याभूतमित्यस्यार्थः प्रतीयते
पृथगिवेति इवशब्दस्य पृथक्त्वोपरिनिवेशात् - धर्माणाम् आन-
न्दादीनां ब्रह्मण्यसत्त्वे धर्मास्सन्तीति सत्त्वनिर्देशो धर्माणामयु-
क्तस्स्यात् तदानीं हि सन्तीवधर्माः सन्तिधर्मा इवेति इवकार-
घटनंस्यात् - धर्मिधर्मभावोपि नकाल्पनिकः। किन्तु पारमार्थि-
कएवसन्तिपदोत्तरं धर्मपदोत्तरञ्च इवकारानिर्देशात् - धर्मास्स-
न्तीतिधर्माणाम् अस्तित्वोक्तेश्च-भामत्यामपि - आनन्दविज्ञानाद-
यो ब्रह्मधर्माः ब्रह्मतत्त्वस्वरूपाः,नतु काल्पनिकाः तस्मादानन्द-
विज्ञानादयो ब्रह्मतत्त्वात्मकतयोक्ताः यत्रयत्र ब्रह्मश्रूयते तत्रत-
त्रानुक्ता अपिलभ्यन्तइति आनन्दादयः प्रधानस्येति सूत्रभाम-
तिग्रन्थः ॥श्री॥

इदन्तुतत्त्वं प्रस्थानत्रयभाष्ये ब्रह्मभिन्नवस्तुविषये अवि-
द्याकल्पितशब्दः आरोपितशब्दः अध्यस्तशब्दः अपरमार्थश-
ब्दः अविद्याप्रत्युपस्थापितशब्दः अविद्योपाधिकशब्दः मायिक-
शब्दः मायामयशब्दः मिथ्याशब्दः मृषाशब्दः कल्पितशब्दश्च
तत्रतत्रसन्ति-नतेशब्दाः अत्यन्तासत्तुच्छासदर्थपराः तथा अद्वै-
तिभिरनभ्युपगमात् किन्तुमिथ्यार्थपराः मिथ्यात्वञ्च ब्रह्म-
तुच्छव्यावृत्तोयः कश्चिद्धर्मः स यथातथावाभवतुतदेतन्मिथ्यात्वं
ब्रह्मभिन्नप्रपञ्चादिसत्त्वं कालत्रयेपि अव्यभिचरितास्थितिकत्व-

रूपं नातिरुणद्धि अन्यथाकारणं ब्रह्म त्रिषु कालेषु सत्त्वञ्जह्यादपि-
वर्तते - एवं कार्यमपि तथाविधं सत्त्वाबाधकत्वेन भासमानत्वे-
ऽप्यसन्नः मतान्तरस्थास्तु अविद्याकल्पितादिशब्दमात्रेण अयथा-
वृत्ताविध्यतीत्यलं ॥ श्रीः ॥

अद्वैतशब्दार्थः कथ्यते - अयं शब्दः न रूढः, कोशादिषु रूढत्वगणनात् - किन्तु यौगिकः॥ अत्र शब्दः सन्निह्य एकमेवाद्वितीया-द्वैतदर्शिश्रुतौ परमात्मविशेषणतया श्रूयते। द्वाभ्याम् इतं द्वीतं वस्तु-यद्विशिष्टं। प्रतियोग्यनुयोगिसम्बन्धविशिष्टः अभावः उत्पत्तिविना-शद्वयविशिष्टः कार्यप्रपञ्चः चिदचिद्द्वयविशिष्टः परमात्मेत्यादी-तपदार्थः तस्य भावो द्वैतं नास्ति द्वैतं यत्र तदद्वैतं। तथाच अद्वैत-पदेन द्वैतनिषेधमुखेन परमात्मा कथ्यते। अभावनिषेधमुखेन पर-मात्मकथने परमात्मा प्रागभावशून्यः ध्वंसशून्यः प्रपञ्चात्यन्ता-भावशून्यः प्रपञ्चभेदशून्यश्चेत्यर्थस्स्यात्। तद्धितस्य स्वार्थकत्वपक्षे-परमात्माप्रपञ्चः - प्रपञ्चभेदनिषेधरूपप्रपञ्चाभेदवान् - परमा-त्मेति सिध्येत; ननु निष्प्रपञ्चं ब्रह्म जडाभिन्नं ब्रह्मेत्यर्थस्सिद्ध्येत्। तद्धितस्य भावार्थत्वपक्षे अद्वैतपदेन अभावत्व निषेधमुखेन भा-वरूपं ब्रह्मेति सिद्ध्या शून्यवादप्रतिषेधस्सिद्धो भवति अद्वैतपदेन उत्पत्तिविनाशद्वयविशिष्टकार्यप्रपञ्चनिषेधमुखेन ब्रह्मप्रतिपा-दने कार्यप्रपञ्चशून्यं कार्यप्रपञ्चत्वशून्यं वा ब्रह्मेति स्यात्। कार-णमायादिप्रपञ्चनिषेधो ब्रह्मणि नासिद्ध्यति। अद्वैतपदेन चिद-चिद्द्वयविशिष्टत्वस्य भावार्थतद्धितार्थयुक्तस्य निषेधे चिदचि-द्विशिष्टत्वशून्यं ब्रह्मेति स्यात् - तदानीं चिदचिद्विशिष्टं ब्रह्मन

सिद्धयति। स्वार्थतद्धितपक्षे चिदचिद्विशिष्टं ब्रह्म ब्रह्मणि निषेद्धुमपि त्यागतं तद्वैतम् · अद्वैतम्-इतिसमासकरणमेवोचितं बहुव्रीहिपक्षे पदद्वयलक्षणापत्त्या असुखमितिपदे दिनकरभाट्टीयोक्तरीत्यानञ्-समास एवोचितः। तदानीं हि अभावभिन्नं वा कार्यप्रपञ्चभिन्नं वा चिदचिद्विशिष्टभिन्नं वा ब्रह्मेत्यर्थः पर्यवस्यति । चिद-चिद्द्वयविशिष्टभिन्नत्वसिद्धौ अन्यतरविशिष्टत्वं पर्यवस्यति ननु चिदचिद्द्वयविशिष्टं ब्रह्मेति । द्विधाइतं द्वीतं। तस्य भावः द्वैतं । द्वैधीभावः द्वैतं नविद्यते यत्र तदद्वैतमिति ब्रह्मानन्दाद्युक्तरीत्या अद्वैतपदार्थस्वीकारे ब्रह्मणः द्वैधीभावः नास्ति सर्वधर्मवैशिष्ट्यं ब्रह्मणि संभवत्येव ब्रह्मानन्दोक्तरीत्याश्रयणेनाद्वैतविशिष्टाद्वैत-मतविरोधः। तस्मिन् पक्षे द्विशब्दस्य द्विधेतिभावार्थकल्पनमेव दोषः ॥ श्रीः ॥

अद्वैतिमते पारमार्थिकसत्त्वं ब्रह्ममात्रवृत्ति, व्यावहारिक-सत्त्वं प्रपञ्चमात्रवृत्ति - ब्रह्मप्रपञ्चोभयानुगतं सत्त्वं ब्रह्मप्रपञ्चै-क्यात्मकं प्रातिभासिकशुक्तिरूप्यरज्जुसर्पदेवमनुष्याद्याकार - निष्ठभासमानात्मवृत्तित्वसाधारणं प्रातिभासिकमात्रवृत्तिप्रा - तिभासिकसत्त्वमिति सत्ता चातुर्विध्यमस्तीत्यत्र अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति-परिहारोभिहितः।नत्वयं विभागः परमार्थतोऽस्तीत्यारम्भणाधि-करणोपक्रमभाष्यं यथा च कारणं ब्रह्मत्रिषुकालेषु सत्त्वं नव्य-भिचरति एवं कार्यं जगत् त्रिषुकालेषु सत्त्वं नव्यभिचरति एकं हि पुनस्सत्त्वमतः कारणात् कार्यस्यानन्यत्वमिति सत्त्वाच्चापर-

स्येति सूत्रभाष्यं दृश्यते हि सत्तालक्षणो ब्रह्मस्वभावः आका-
शादिष्वनुवर्तमान इत्युक्तमिति दृश्यतेऽन्यत्रापि सूत्रभाष्यं अन्यो-
न्यस्मिन्नन्योन्यात्मकताम् अन्योन्यधर्मा आत्मस्य न चानद्भव-
स्तान्यथाभावेन देहेनकांश्चन व्याप्रियते इत्याशङ्क्याससभाष्यं चान्य-
त्ते चेति स्वप्नदृष्टाः पदार्थाः वैलक्षण्याच्च न स्वप्नादिवदिति सूत्र-
भाष्यम्। एवम्। अन्यदपि भगवत्पादभाष्यम्। एवं जातीयकं प्रमा
णं। पारमार्थिकत्वरूपसत्त्वेनप्रपञ्चत्वव्यधिकरणेनकृत्स्नप्रपञ्चस्या-
पि ब्रह्मण्यभावप्रतियोगित्वं मिथ्यात्वं ब्रह्मभिन्नकृत्स्नप्रपञ्चस्य
विशिष्टाद्वैतमतेतु सत्यपदं निरुपाधिकसत्तायोगि ब्रह्म आहेत्या-
दि जन्माद्यधिकरणविशिष्टाद्वैतभाष्येण ब्रह्मणः निरुपाधिकस-
त्त्वं प्रपञ्चस्य सोपाधिकसत्त्वमङ्गीकृतं प्रपञ्चस्य अनाशीपरमार्थ-
श्च प्राज्ञैरभ्युपगम्यते - तत्तु नाशि न संदेहोनाशिद्रव्योपपादित-
मित्यादिविष्णुपुराणश्लोकव्याख्यानप्रकरणे विनाशित्वस्य वि
शिष्टाद्वैतभाष्येमिथ्यात्वरूपत्वोक्तेः कृत्स्नप्रपञ्चस्य विनाशि -
त्वरूपं मिथ्यात्वमङ्गीकृतं - विशिष्टाद्वैतभाष्ये प्रपञ्चस्यापि स-
त्यशब्दमुख्यार्थत्वे सत्यशब्दाभिधेयश्च परं ब्रह्मसत्यशब्दनिर्दि-
ष्टमेव भूमेति सत्याख्यं परं ब्रह्मैवभूमेत्युपदिश्यतइति सत्यश-
ब्दाभिधेयं परंब्रह्मप्रतीयते ॥ श्रीः ॥

सत्यशब्दश्च - सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु परस्मिन्
ब्रह्मणि प्रयुक्तइत्यादीनि भूमाधिकरणवाक्यानि ब्रह्मभिन्नकृत्स्न-
प्रपञ्चस्य सत्यत्वप्रतिकोटिमिथ्यात्वं ज्ञापयन्ति। मध्वमते तत्त्व-
विवेकतत्त्वसंख्यानादिभाष्यकारकृतग्रन्थेस्वरूपप्रमितिप्रवृत्तिरूप-

सत्तात्रैविद्ध्ये परानपेक्षं स्वनन्वनत्त्वं नत्र परापेक्षम -
स्वनन्वंनत्त्वमित्यादिलेखनेन परानपेक्षसत्ताकत्वं ब्रह्मणः त-
द्भिन्नकृत्स्नप्रपञ्चस्य परापेक्षसत्ताकत्वमिति सत्ताद्वैविध्यमुक्तम्
एवं त्रिष्वपि मतेषु प्रपञ्चब्रह्मणोः विलक्षणसत्त्वाङ्गीकारसा-
म्येपि अद्वैतिनं सत्ताचातुर्विध्यवादिनम् असत्यवादीति वदन्तः
तत्तद्भाष्यादिग्रन्थार्थप्रच्छादनेन जगत् व्यामोहयन्ति - किञ्च-
मध्वमते - शुक्तिरूप्य रज्जु सर्पादीनामत्यन्तासत्त्वं शश शृङ्गव-
दभ्युपगम्यते विशिष्टाद्वैतिमते देवोहं मनुष्योहमिति भ्रमेभास-
मानस्य देवमनुष्याद्याकारे आत्मनिष्ठत्वस्य असत्त्वमुच्यते
रज्जु सर्पशुक्तिरूप्यादीनां देवोहं मनुष्योहमिति भास -
मानदेवाद्याकारनिष्ठाहमर्थात्मनिष्ठत्वस्य च प्रातिभासिक -
पदार्थोत्पत्तिमङ्गीकृत्य प्रातिभासिकसत्तामङ्गीकृतवतां अद्वैति-
नाम् असत्यवादित्वेन परैः अभिहितं दूषणं कथं संगच्छेत
सत्यवादिनां मध्ये अद्वैतिनएव सर्वसत्यत्वाङ्गीकारात् श्रेष्ठा इति
सुधियोविदांकुर्वन्तु ॥ श्रीः ॥

विनायकब्राह्म्यादि चामुण्ड्यन्तमातृगणचतुर्भगिन्या -
दीनां भूतत्वमित्यत्र भूतानि विनायकमातृगण चतुर्भगिन्या-
दीनि भूतेज्याः भूतानां पूजकायान्तीति - यान्ति देवव्रता देवान्
पितन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्यायान्ति मद्या-
जिनोपि मामिति गीताश्लोकभाष्यं प्रमाणम्। उक्तमातृगणादीनां
याजकस्य तामसत्वमित्यत्र - प्रेतान् भूतगणांश्च सप्तमातृकादींश्च
अन्येयजन्ते - तामसाजनाइति यजन्ते सात्त्विकादेवान् यक्षर-

श्चाभिस्तामसाः । एतेन भूतगणांश्चान्ये यजन्ते तामसा जना इति गीताश्लोकभाष्यं प्रमाणं तामसानामधोगतिरित्यत्र । जघन्य-गुणतमोनिष्ठाः मूढा अधोगच्छन्ति पश्वादिषूत्पद्यन्त इति। ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसा इति गीताश्लोकभाष्यं प्रमाणं - चतुर्भ-गिनी - चतुर्णां भगिनी दुर्गा - स्वस्राम्बिकया तं जुषस्वेति तैत्ति-रीयश्रुतिः दुर्गायाः शिवभगिनीत्वे श्रीरामायणबालकाण्डगङ्गा-वतरणप्रकरणं तस्या गङ्गाभगिनीत्वे - वासुदेवस्य भगिनीति। विराटपर्वतृतीयाध्याययुधिष्ठिरकृतदुर्गास्तववचनं वासुदेवभ-गिनीत्वे - गोपेन्द्रभगिनीत्वे भीष्मपर्वत्रयोविंशाध्यायगतार्जुनकृत-दुर्गास्तवीयगोपेन्द्रस्यानुजेतिवचनं प्रमाणं। नैवं चतुर्भगिनीत्वम् अन्यस्याः कुत्रचिदपि प्रमाणग्रन्थे लिखितमस्ति । उमा दुर्गा-पार्वत्यादिशब्दाः पर्याया इति सुप्रसिद्धम् । नव्यद्वैतिनः एकं चैतन्यम् उपाधिना जीवेश्वररूपाभ्यां भिन्नमित्यत्र प्रसिद्धश्रुति-स्मृतिसूत्रेषु नैकमपि प्रमाणमुपलभ्यते प्रत्युत जीवब्रह्मभेदस्य औपाधिकत्वबाधकं स्वाभाविकत्वबोधकं विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्। आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽ-र्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । पूतात्मा परमा-त्मा च मुक्तानां परमागतिः । मुक्तोपसृप्यव्यपदेशाच्चेति मुण्डक-श्रुतिगीतानामसहस्रब्रह्मसूत्रान्तर्गतवचनानि मोक्षदशायामपि कर्मकर्तृव्यपदेशाच्चेति सूत्रोक्तरीत्या मुक्तब्रह्मणोः कर्मकर्तृभावेन भेदसमर्पकाणि जीवब्रह्मभेदस्य औपाधिकत्वन्निवारयन्ति स्वा-भाविकत्वं कथयन्तीतिनिष्प्रत्यूहं । मुक्तिदशायामुपाधेर्विनाशेन

औपाधिकभेदस्याप्रसक्तेः। उदाहृतमुण्डकश्रुतिसूत्रयोः अद्वैतभाष्येऽपि परममुक्तिविषयतया योजनेनापेक्षितापरविद्याधीनमुक्तिविषयत्वास्वीकारात्। यत्तु अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्चेति कठवल्लीवाक्येन परमात्मनोऽपि जीवेश्वरभेदेन औपाधिकभेदोऽवगम्यत इति; तन्न.नहि रूपंरूपमित्येतद्घटकरूपपदमन्तःकरणपरं मायापरं नतु गिरिनदीसमुद्रघटपटकुड्यादिपरमिति निर्बन्धे प्रमाणमस्ति। नामरूपे व्याकरवाणि संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादिति श्रुतिसूत्रानुसारेण वीप्साविषयरूपशब्दस्य घटपटादिमूर्तिसामान्यपरतया घटपटादि सर्वप्रतिरूपत्वस्यैव कथनेन भवदभिमतान्तःकरणमायामात्रप्रतिरूपत्वाख्यजीवत्वेश्वरत्वबोधकत्वाभावात्। वस्तुतस्तु रूपपदं प्रकृते जीवपरं।सर्वभूतान्तरात्मेतिपदेन सर्वजीवान्तर्यामिणं गृहीत्वा तस्यान्तर्यामिणः स्वनियम्यतत्तज्जीवरूपमुपाधीकृत्यौपाधिकोऽन्तर्यामिभेदः तद्वाक्येन प्रतिपाद्यते सर्वभूतान्तरात्मेति नियन्त्रन्तर्यामिबोधकपदसमभिव्याहारसामर्थ्येन रूपंरूपमित्युपाधिबोधकपदस्य नियम्यस्वरूपजीवाख्योपाधिपरत्वावश्यकत्वात्। बृहदारण्यकोपनिषत्सु तृतीयाध्याये सप्तमब्राह्मणे यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरोऽयं सर्वाणि भूतानि न विदुः यस्सर्वाणि भूतान्यन्तरो यमयति एषते आत्मा अन्तर्यामीत्यत्र सर्वभूतान्तरात्मनः यमयितृत्वान्तर्यामित्वादेः कण्ठत एव कथनेन नियम्यसर्वभूतानां न विदुरिति समभिव्याहारात् चेतनत्वावगमेन च सर्वभूतान्तरात्मा नियन्त्रन्तर्याम्येव तन्नि-

यस्यसर्वंजीवा एव सर्वभूतानि रूपं रूपमित्युपात्तानि तत्वन्तः करणानि-माया वा जीवेश्वरोपाधयः रूपंरूपमिति शब्दिता अ-वासंशब्दितत्वादनुपस्थितत्वाच्च तेषां। यत्तु याज्ञवल्क्यस्मृतौ आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।तथात्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमानिति वचनं जीवब्रह्मणोरौपाधिकभेदे प्रमा-णमिति;तन्न,घटादिषु एकमाकाशं यथा पृथग्भवेत् स्थितिं पृथ-क्प्राप्नुयात् भवेदिति स्थाने दार्ष्टान्तिके अनेकस्थ इति स्थितिनि-र्देशात्।तथा एक आत्मा अनेकस्थः पृथग्भावाद्दौ स्थितिं प्राप्त इति प्रथमदृष्टान्तदार्ष्टान्तिकभागार्थः। तथाचाकाशवत् अनेकवस्तु-षु स्थितिरात्मनः प्रतीयते न त्वौपाधिको भेदः। द्वितीयदृष्टान्ते साधारणधर्मवाचिपदस्यापेक्षितत्वात् स्थ इति पदमनुषञ्जनीयं। नतु प्रतिबिम्बते इति पदमध्याहर्तव्यं अनुषंगसंभवे अध्याहारस्या नुपस्थितपदकल्पनरूपस्यायुक्तत्वात्। जलेष्वित्यनुक्त्वा जला-धारेष्वित्युक्त्या च प्रतिबिंबत इति नाध्याहर्तव्यमिति प्रतीयते जले एव सूर्यस्य प्रतिबिम्बः न जलाधारेषु। अतः जलाधारेषु मेघेषु यथा अंशुमान् अवतिष्ठते एकोऽपि तथा आत्मा अनेकेषु अवतिष्ठत इति अनेकत्र स्थितिरेवोक्ता नत्वौपाधिकः प्रतिबिम्ब-एकस्यानेकत्रावस्थित्यसंभवाशंकानिराकरणपरमिदं वचनं। यद-पि रूपंरूपं प्रतिरूपो बभूव,तदस्य रूपं प्रति च क्षणायेति वाक्यं। तदपि पूर्वोदाहृतकठवल्लीवाक्यवत् नियम्यतत्जीवोपाधिका-न्तर्यामिभेदपरं। तत्समानाकारत्वात्। यदपि कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति वचनं,तदपि न जीवस्य उपाध्य-वच्छिन्नचैतन्यत्वरूपजीवत्वे प्रमाणम्। उक्तवचनरीत्या कार्यो-

पाधिकत्वविशिष्टचैतन्यस्य जीवत्वापत्त्या जीवस्य जीवत्वेन श्रुतिस्मृतिन्यायसिद्धानादित्वभंगापत्तेः। किन्तु जीवस्यैव सत बहुव्रीहिसमासेन कार्यभौतिकशरीराख्योपाधिसंबन्ध उच्यते- ईश्वरस्यैव सतः मायाख्यकारणात्मकशरीरोपाधिसंबन्ध उच्यते। मायाह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं मैवम्मां ज्ञातुमर्हसीति मोक्षधर्मनारायणीयविश्वरूपशरीरप्रदर्शक भगवन्नारायणवचनप्रामाण्यात्। यदपि प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासादिति सूत्रं जीवब्रह्मणोरौपाधिकभेदपरम्, अङ्गुल्याद्युपाधिषु प्रकाशादिवत् प्रकाशस्वरूप आत्मा कर्मणि उपाधिष्विन्त्यतः सौरादिप्रकाशादीनामिव औपाधिक एव आत्मभेद इत्यविशेषः तत्वमसीति जीवब्रह्मैक्याभ्यासादिति सूत्रार्थ इति तदपि न सूत्रे उपाधिबोधकपदाभावात्।कर्मणीति पदस्य उपाधिपरत्वन्तु साहसकृत्यम्। अत एव भाष्यव्याख्याने रामानन्दीये कर्मणीत्यस्य उपासनाख्यकर्मणीति व्याख्या। नहि कस्मिन्नपि सूत्रे जीवेश्वरयोरौपाधिकभेदप्रयोजकोपाधिः दृश्यते येन तयोस्सूत्रकृन्मते औपाधिकभेदस्सिध्येत्। सूत्रस्य तु कर्मण्यभ्यासादिति समभिव्याहारेण कर्मण एवाभ्यासः। तथाच ब्रह्मोपासनकर्माभ्यासे ते प्रकाशादिधर्मवत् धर्मान्तरस्य चकारसमुच्चितस्य ब्राह्मस्य प्रकाशः भवतीति अस्मिन्नर्थे विशेषो नास्तीति स्वारसिकार्थः। यत्तु भारते मोक्षधर्मे षट्त्रिंशदधिकद्विशततमेऽध्याये चतुर्लक्षणजन्त्वाद्यं चतुर्वर्गं प्रचक्षते। व्यक्तमव्यक्तजश्चैव तथा बुद्धमचेतनामिति एकाधिकत्रिंशश्लोके चतुर्ल-

क्षणं जन्मवृद्धिजीर्णतामृतिविकारवत् महदहंकारपञ्चतन्मात्रैका
दशेन्द्रियपञ्चभूतं तत्तं तदुपाधिकं चतुर्वर्गार्थिनं व्यक्तं जीवम् अ
व्यक्तजं मायोपाधिकमीश्वरं तथा तदुभयमपि बुद्धमचेतनञ्च चि
दचिदात्मकमित्यर्थः इति नीलकण्ठस्य व्याख्यानं तदसमी-
चीनम् । उत्पत्त्यर्थकजनिमति पदद्वये तदुपाधिकमित्यर्थकथनस्य
शब्दगतिविरुद्धत्वात्। व्यक्तपदस्य जीवे क्वापि प्रयोगादर्शनाच्च।
चतुर्वर्गपदस्य चतुर्वर्गार्थिनमित्यर्थत्वासंभवाच्च । तथेति पदे
तदुभयमपीति व्याख्यानस्योच्छन्दत्वाच्च । चिदाश्रयार्थकस्य
बुद्धपदस्य चिन्मात्रार्थत्वासांगत्याच्च। किन्तु जराय्वण्डस्वेदो-
द्भिदाख्यचतुर्लक्षणादुत्पन्नं चतुर्वर्गं जरायुजाण्डजस्वेदजोद्भिज्जा-
भिख्यं चतुर्वर्गं व्यक्तं वस्तु अव्यक्तजम् अव्यक्तादुत्पन्नं प्रच-
क्षते। अबुद्धं बोधानाश्रयम्। अचेतनं वस्तु च तथा अव्यक्तजं प्रच-
क्षत इति शब्दस्वरस्यानुगुणः श्लोकार्थः। तस्मादेकस्यैव चैतन्यस्य-
औपाधिको जीवेश्वरभेद इत्यत्र न शास्त्रमस्ति । एवं जीवस्या-
णुत्वावरत्वे स्वाभाविके तत्त्वौपाधिकमात्रे श्वेताश्वतरोपनिष-
द्गतबुद्धेर्गुणे नात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरश्च दृष्ट इति मन्त्र-
प्रामाण्यात् । आत्मगुणेन जीवात्मस्वरूपगुणेन बुद्धेरन्तःकर-
णस्य गुणेन च प्रथमचकारः बुद्धिगुणात्मगुणसमुच्चयार्थः ।
आराग्रं तोत्राग्रं अवरः अपकृष्टः द्वितीयचकारः आराग्रमा-
त्रत्वावरत्वसमुच्चयार्थः । एवकारः बुध्युपाधिकमेव जीवस्या-
राग्रमात्रत्वमवरत्वञ्च नात्मस्वभावकृतमितिमतव्यवच्छेदार्थकः।
आराग्रमात्र इति मात्रशब्दः मुक्तिदशायामपि जीवस्य महत्त्वव्य-
वच्छेदार्थकः । उभयत्र हिशब्दः वेदलोकप्रसिद्धिद्योतकः । दृष्ट-

शब्दः तत्त्वदर्शिभिः दृष्ट इत्यर्थकः। एतन्मन्त्रसामर्थ्यादेवार्था-दीशस्य स्वाभाविकमहत्त्वपरत्वे न त्वौपाधिकमात्रे इत्यपि सि-ध्यति ॥ एवं मोक्षधर्मे षट्त्रिंशदधिकद्विशततमाध्याये द्वावा-त्मानौ न वेदेषु सिद्धान्तेष्वप्युदाहृतावित्यत्र त्रिंशत्तमश्लोके वेद-मते सांख्यादिमतेऽपि जीवः परमात्मेति द्वावात्मानाविति शु-कस्य व्यासोपदेशेन आत्मैक्यपक्षः न व्यासाभिमत इति सि-ध्यति । एवं मोक्षधर्म एव पञ्चाशदधिकत्रिशततमाध्याये बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु। को ह्यत्र पुरुषश्रेष्ठः को वा योनिरिहोच्यत इति जनमेजयप्रश्नश्लोकः। तत्र पुरुषबहु त्वैकत्वविषयः प्रथमप्रश्नः। पुरुषाणाम्मध्ये श्रेष्ठपुरुषविषयः द्वि-तीयः प्रश्नः। पुरुषाणां योनिपुरुषविषयस्तृतीयः। द्वितीय तृतीय-प्रश्नौ प्रथमप्रश्नीयपुरुषबहुत्वकोटयवलंबिनौ । पुरुषैकत्वको-टयवलंबित्वे एकपुरुषे तत्पुरुषनिरूपितश्रेष्ठ्ययोनित्वविषयक-त्वासंभवात् ।यत्तु को ह्यत्र पुरुषश्रेष्ठः को वा योनिरिहोच्यत इ-त्यस्य न प्रश्नद्वयपरत्वं।किन्तु किंशब्दद्वयमाक्षेपार्थं न प्रश्नार्थे।श्रे-ष्ठः पुरुषः कः कोऽपि नास्ति योनिः पुरुषः कः कोपि नास्ती-त्यर्थ इति नीलकण्ठव्याख्यानं। तन्मन्दं।बहवः पुरुषा राजन् सां-ख्ययोगविचारणे । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह । बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं वि-श्वमाख्यास्यामि गुणाधिकम् ॥ इति वैशंपायनीयप्रतिव-चनश्लोके । बहूनामित्यादिना तथा तं पुरुषमित्यन्तेन बहु-पुरुषनिरूपितयोनित्वाश्रयपुरुषस्य गुणाधिकमित्यनेन बहुपुरु-षावधिकगुणाधिक्यरूपश्रैष्ठ्याश्रयपुरुषस्योक्त्या तद्विषयक प्रश्न-

द्वयस्य प्रश्नश्लोकस्थितत्वावश्यकत्वात् । अन्यथा अपृष्टो-त्तरापत्तेः । प्रश्नाभावे श्रेष्ठयोनिपुरुषविषये योनिश्रेष्ठपुरु-षस्य प्रतिवक्त्रा अनिरूप्यत्वाच्च । प्रतिवचनगतप्रथमश्लोक-स्यायमर्थः सांख्ययोगशास्त्रविचारणे कृते बहवः पुरुषाः प्रती-यन्ते एतच्छ्रेष्ठत्वयोनित्वाश्रयम् एतदिति सर्वनाम्ना अव्यव-हितपूर्वस्थितपरामर्शस्वभावेन अव्यवहितपूर्वस्थितप्रश्नश्लो-कद्वितीयार्धबोधितश्रेष्ठयोनिपुरुषस्यैव परामर्शनीयत्वात् । तथा च एतत् श्रेष्ठत्वयोनित्वविशिष्टमेकं पुरुषं सांख्ययोगशास्त्र-निष्ठाः नेच्छन्तीति । एतेन वेदार्थविचारे पुरुषबहुत्वं श्रेष्ठपुरुषो योनिपुरुषश्चाङ्गीकृतौ वैदिकैरिति अर्थात्सिद्धं प्रतिवचनीयद्विती-यश्लोके बहूनां पुरुषाणामित्यस्य चतुर्मुखरुद्रादिबहुपुरुषाणा-मित्यर्थः । एतदुपाख्यानान्ते चतुर्मुखरुद्रादिपुरुषयोनित्वस्य कथनात् । यथाशब्दस्य येन प्रकारेणेत्यर्थः । तथाशब्दस्य तादृशप्रकारविशिष्टमित्यर्थः। नमस्कृत्वा च गुरवे व्यासायामित-तेजसे।इदं पुरुषसूक्तं हि चतुर्वेदेषु पठ्यते। ऋतं सत्यञ्च विख्यात-मृषिसिंहेन चिन्तितं । ऋषिसिंहेन व्यासेन उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः । अध्यात्मचिन्तामाश्रित्य शास्त्राण्यु-क्तानि भारत । समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् । त-त्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः । समासतः व्यवधा-नरहितसंश्लेषेणोक्तसंश्लेषाभिन्नं पुरुषैकत्वं पुरुषाणा-मैक्यमुक्तवान् ॥ ननु स्वरूपैक्यं समासत इति पदवैयर्थ्या-पत्तेः । राजपुरुष इत्यादौ पदयोः विभक्तिव्यवधानराहित्यवि-शिष्टसंश्लेषे समासपदप्रयोगात् । ते तुभ्यं अमितौजसः अपरि-

मितज्ञानशक्तेः व्यासस्य प्रसादात् संप्रवक्ष्यामि सम्यक्प्रक-र्षेण वक्ष्यामि। अत्राप्युदाहरन्तीममितिहासं पुरातनं। ब्रह्मणा-सह संवादं त्र्यंबकस्य विशांपते।स्पष्टं ब्रह्माणं प्रति रुद्र उवाच। बहवः पुरुषा ब्रह्मन् त्वया सृष्टा स्वयंभुवा।सृज्यन्ते चापरे ब्रह्मन् सचैकः पुरुषो विराट्।कोह्यसौ चिन्त्यते ब्रह्मं स्त्वयैकः पुरुषोत्तमः। ब्रह्मोवाच।बहूनां पुरुषाणां सः यथैका योनिरुच्यते। तथा तं पु-रुषं विश्वंपरमं सुमहत्तमं।निर्गुणं निर्गुणाभूत्वा प्रविशान्ति सनातनं प्रवक्ष्यामीति शेषः।अद्ध्यायः। ब्रह्मोवाच। शृणु पुत्र यथाह्येष पुरुषश्शाश्वतोऽव्ययः।अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते। न स-शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम।सगुणोनिर्गुणोविश्वो ज्ञानदृ-श्यो ह्यसौ स्मृतः। अशरीरश्शरीरेषु सर्वेषु निवसत्यसौ। वसन्न-पि शरीरेषु न स लिप्यति कर्मभिः।ममान्तरात्मा तवच ये चान्ये-देहिसंज्ञिताः।सर्वेषां साक्षिभूतोसौ न ग्राह्यः केन चित्क्वचित्।मम चतुर्मुखस्यतवरुद्रस्य अन्तरात्मा अन्तर्यामी।तेनर्विधिशिवापेक्षया अन्तर्यामी भिन्न इति सिद्ध्यति।तस्यैकत्वम्महत्वञ्च सचैकः पुरु-षस्स्मृतः। महापुरुषशब्दं सः बिभर्त्येकस्सनातनः।एकः मुख्यः महापुरुषशब्दं सः बिभर्त्तीत्यनेन तद्भिन्नाः विधिशिवादयः देहि-संज्ञिताः महत्त्वहीनपुरुषाइति सिद्ध्यति। पुरुषबहुत्वञ्च संसू-च्यते। पुरुषबहुत्वाभावे महत्त्वविशेषणेन व्यावर्तनीयपरिच्छिन्न-पुरुषाभावात्। महापुरुष इति निर्देशानुपपत्तेः । जडव्यावर्तकं महत्वमिति न संगतं। पुरुषपदेन चेतनवाचिना तद्व्यावृत्ति-सिद्धेः। एको हुताशो बहुधा समिद्ध्यत एकस्सूर्य्यस्तपसो यो निरेकः। एको वायुर्बहुधा वाति लोके महोदधिश्चाप्यंभसांयोनिरे-

कः सर्वान्तरात्मा इत्यादिना विशिष्टत्वान्तर्यामित्वमुक्तं। नन्वेकस्य महापुरुषस्य कथं संभवति एकस्य सर्वान्तर्यामित्वासंभवादिति शंकापरिहाराय आह - एको हुताश इत्यादि। एकोऽपि हुताशः तत्तत्काष्ठेषु संपिण्डितप्रमाणः काष्ठोपाधिकं बहुभावं गच्छति तप्यते प्रकाश्यते अनेनेति तपः। बहुत्वाश्रयश्चक्षुः तस्य तपसः योनि-रनुग्राहकः एकस्सूर्यः। अनुग्राह्यभेदेनानुग्राहकः बहुभावं गच्छति। एको वायुः प्राणव्यानादिवस्तुभेदेन बहुभावं गच्छति। अंभसां-योनिः एकः महोदधिः स्वसंबद्धप्राच्यादिदेशभेदात् पूर्वसमुद्रो दक्षिणसमुद्रः पश्चिमसमुद्र इति बहुभावं गच्छति। पुरुषश्चैको-निर्गुणो विश्वरूपः तं निर्गुणं पुरुषं चाविशन्ति। निर्गुणः वक्ष्यमाणरीत्या सर्वदा निर्गुणः। एकः पुरुषः अन्तरात्म-भूतः। पुरुषः विश्वरूपः यदपेक्षया पुरुषस्यान्तरत्वं सर्वान्त-रात्मेत्यादिनोक्तं तत्तत् विशिष्टत्वादितत्तद्रूपप्रतिसंबन्धिभेदात् विश्वरूपः नानास्वरूपः। तथा च नियम्यविशिष्टत्वादिरूपोपा-धिभेदात् सर्वान्तरात्मत्वं परमात्मन उपपन्नमिति भावः। यत्तु परमात्मनः एकस्य पुरुषस्यान्तःकरणाद्युपाधिभेदात् जीवेश्वर-भेदेन नानाविधपुरुषत्वं एको हुताश इत्यादिदृष्टान्तैर्विवक्षित-मिति तन्न। अत्रैव निर्गुणं निर्गुणा भूत्वा प्रविशन्तीत्यस्मिन् निर्गु-णा इति बहुवचनपदोक्तानां मुक्तजीवानां बहुवचनेन परस्परं भेदस्य निर्गुणं प्रविशन्तीति मुक्तजीवानां प्रवेशकर्तृत्वस्य निर्गुण-परमात्मनः प्रवेशकर्मत्वस्योक्त्या कर्मकर्तृव्यपदेशादिति न्यायेन मुक्तजीवपरमात्मभेदस्य च सिद्ध्या मुक्तानामुपाधिनाशे सति परस्परं ब्रह्मणा च औपाधिकभेदासंभवात् तद्भेदस्य पारमार्थि-

कत्वावश्यकतया उपाधिना जीवब्रह्मभेदस्वीकारस्य भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन निष्प्रयोजनत्वात्। तं निर्गुणं पुरुषञ्चाविशन्तीत्युक्तं। किन्तत् निर्गुणत्वमित्यतस्तन्निर्वक्ति। हित्वा गुणमयं सर्वं कर्म हित्वाशुभाशुभं। उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः। गुणमयसर्वकर्मशुभाशुभसत्यानृतहीनत्वं निर्गुणत्वमिति यावत्। एवं हि परमात्मानं केचिद्रच्छन्ति पण्डिताः। एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः। एवं हि विराड्रूपं हि एकात्मानं मुख्यात्मानम् आत्मानं जीवात्मानं। ननु निर्गुणत्वस्य जीवब्रह्मसाधारण्ये जीवात्मपरमात्मनोः को विशेष इत्यत आह। तत्र यः परमात्मा हि सः नित्यं निर्गुणः स्मृतः। तत्र निर्गुणयोः मुक्तजीवपरमात्मनोर्मध्ये परमात्मा हि परमात्मेति प्रसिद्धः सः नित्यं निर्गुणः। तेन जीवस्य निर्गुणत्वं परमात्मानुसन्धानाधीनं मुक्तिकालमात्रभावि। परमात्मनस्तु अन्यानधीनं सार्वकालिकमिति सिद्ध्यति। अन्यानधीनसार्वकालिकनैर्गुण्याश्रयः परमात्मा किंरूप इत्यत आह। स हि नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि सः। एतेन परमात्मानमनूद्य नारायणत्वविधानात् नारायणाभिन्नानां परमात्मत्वन्नास्तीति स्पष्टमवगम्यते। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। स्पष्टं। कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते। स सप्तदशकेनापि राशिना युज्यते च सः। कर्मात्मा पुण्यपापरूपकर्मयुक्तात्मा अपरः परमात्मभिन्नपुरुषः। सप्तदशकेन राशिना लिङ्गशरीरेण। बहवः पुरुषा इत्युपक्रान्तं पुरुषबहुत्वमुपसंहरति। एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमं। एवं जीवात्मपरमात्मभेदेन बहुप्रकारः पुरुषः हे रुद्र ते तुभ्यं प्रोक्त-

अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वञ्च मत्तः प्रसूतः। मत्तो जगज्जंगमं स्थावरञ्च सर्वे वेदाः सरहस्या हि पुत्र। अहं वक्ता चतुर्मुखः तस्मात् नारायणात्। त्वञ्च हि रुद्रत्वञ्च। पुत्र चतुर्मुखस्य मम पुत्र- रुद्र एतदुपसंहारवचनरीत्या बहूनां पुरुषाणां हि यथैका योनि- रुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमित्युक्तं। पर- मात्मनः पुरुषस्य बहुपुरुषयोनित्वं चतुर्मुखरुद्रादिबहुपुरुष- योनित्वमिति निर्णीयते। चतुर्विभक्तः पुरुषस्स क्रीडति यथेच्छति। एवं स भगवान स्वेन ज्ञानेन प्रतिबोधितः। एतत्ते कथितं पुत्र यथाव- दनुपृच्छतः। चतुर्विभक्तः। संकर्षणप्रद्युम्नानिरुद्धवासुदेवरूपैः चतुर्भिर्विभक्तः। तस्मात् पुरुषाणां स्वरूपतो बहुत्वं व्यवधान- रहितपरमात्मसंश्लेषः जीवानां परमात्मस्वरूपैक्यं परमात्मनः नारायणत्वं चतुर्मुखस्य नारायणपुत्रत्वं रुद्रस्य चतुर्मुखपुत्रत्वं व्यासाभिमतमिति सर्वान्निर्णीतं ॥ श्रीः ॥

माया जीवेशावाभासेन करोतीति वाक्ये आभासेनेति तृतीया प्रकृत्यादिभ्य उपसंख्यानमिति रीत्या वैशिष्ट्यार्था आ- भासविशिष्टौ जीवेशौ करोतीत्यर्थः ॥ वैशिष्ट्यं भेदसंब- न्धः। नत्वात्मनात्मा तृतीय इति वद्भेदसंबन्धः ॥ जीवस्या- भासरूपत्वेऽपि ईशे तदसंभवात्- दर्पणाद्युपाधिगतमालिन्यादि- दोषस्य तद्गते प्रतिविम्वरूपाभासे इव उपाधिगतदोषाणामी- शगतत्वे ईशस्य जीववत् सदोषत्वापत्तेः। अतो नानेन वा- क्येन जीवेशयोरुपाध्यधीनस्वरूपत्वसिद्धिः- आभास एव चे- ति सूत्रं जीवे अनाभासब्रह्माभेदं प्रतिषेधति। एवकारेण शंखः पाण्डर एवेत्यत्र एवकारेण शंखे पाण्डरत्वविरोधिपीतत्वादि-

व्यावृत्तिवत् आभासत्वविरोध्यनाभासत्वस्य जीवे व्यावर्त - नात्-वस्तुनस्तु अंशो नानेति सूत्रोक्तोऽशः टंकच्छिन्नपाषाण-शकलस्येव नमुख्यःब्रह्मणोऽच्छेद्यत्वात् किन्तु अंशाभासः हेत्वा-भासवत्। अंशत्वशून्यत्वे सति अंशसदृश इत्याह सूत्रकृत् आभा-स एव चेति अंशाभास एवायं जीवः न ब्रह्मणो मुख्यांशइत्यर्थः यथाह्ययं ज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन्-उपा-धिना क्रियते भेदरूपो देवक्षेत्रेष्वेवमजोऽयमात्मेति शास्त्रं तदपि न जीवब्रह्मणोरौपाधिकभेदं कथयति।तस्यार्थः ॥ ज्योतिःस्वरूपो-विवस्वान भिन्ना अपः बहुधा अनुगच्छन् भिन्नभिन्नतत्तदप्सं योगानुकूलबहुप्रकारव्यापाराश्रयस्सन् उपाधिना भिन्नभिन्न-तत्तदप्संयोगानुकूलबहुप्रकारव्यापारवत्त्वेन भिद्यत इति भेदः। भिन्न इति यावत्-भिन्नरूपः क्रियते देवः द्योतनस्वभावः। आ-त्मा क्षेत्रेषु-महाभूतान्यहंकारो बुद्धिरव्यक्तमेव चेत्यादिना गाता-क्तेषु महाभूतादिषु एवं महाभूतादि तत्तत् क्षेत्रसंयोगानुकूलबहु व्यापाराश्रयत्वेन उपाधिना भिन्नरूपः क्रियते इति तत्रान्तःक-रणस्य जीवोपाधित्वं मायाया ईशोपाधित्वं तादृशोपाधिप्रयुक्तः आत्मनि जीवेश्वरभेद इत्यस्य का प्रसक्तिः अनुगच्छन् उपाधि-नेत्यव्यवधानात् उपाधिशब्दोऽनुगमनपर एव बहुधात अनुग-मनविशेषणस्वारस्येनानुगमनबहुत्वप्रयुक्त एवात्मभेद इत्यवग-म्यते।अनुगमनबहुत्वे हेतुः अपो भिन्नाइति अप्सुभिन्नत्वविशेषणं तस्मात् नाब्रूपोपाधिभेदात् सूर्यप्रतिबिम्बभेदः-एक एव हि भूता-त्मा भूते भूते व्यवास्थितः।एकधा बहुधा चैव दृश्यते जलचन्द्रव-

दिति वचनमपि न जीवेशयोरौपाधिकभेदं वक्ति भूतात्मश-
ब्दितस्य जीवस्यैव भूताभूतत्वावस्थितिभेदेन एकत्वनानात्वोक्तेः।
जलचन्द्रवदिति दृष्टान्तानुसारेण दार्ष्टान्तिके जलचन्द्रस्थानीय-
स्य भूतात्मनः चन्द्रस्थानीयत्वाभावेन ईशत्वासंभवेन जीवत्वा-
वश्यकतया केवलात्मनि औपाधिकजीवेश्वरभेदपरत्वानुपपत्ते-
रित्याहुः- तथा द्वैतिनस्तु उदाहृतश्रुतिस्मृतिसूत्रादिभिः जीवे-
श्वरयोर्भेदस्य औपाधिकत्वासिद्धावपि श्रीभागवते-प्रमाणसारभू-
ते प्रथमश्लोके यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं
सत्यं परं धीमहीत्यत्र जगन्मिथ्यात्वमुक्तं - अन्त्याध्यायश्लोके
सर्ववेदान्तसारं यत् ब्रह्मात्मैकत्वलक्षणं । वस्त्वद्वितीयं तन्निष्ठं
कैवल्यैकप्रयोजनमित्यत्र जीवेश्वरयोः स्वरूपैक्यमुक्तं। सप्तमस्कन्धे
यत्र जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुख-
श्रीरिति जीवेशयोरौपाधिकत्वाविनाभूतः बिम्बप्रतिबिम्बभावः
कथितः। तृतीयस्कन्धे।। नैकात्मतां मे स्पृहयन्ति केचिन्मत्पाद-
सेवाभिरता मदीहाः।येऽन्योऽन्यतो भागवताःप्रसज्य सभाजयन्ते
मम पौरुषाणीति कपिलवासुदेवेन जीवब्रह्मणोः स्वरूपैक्यं
बहुमहर्षिसम्मतं।तयोर्भेदस्तु केषाञ्चिदेवाभिमत इति केचिदित्य-
नेनास्वरससूचकेन कथितः। एकादशस्कंधे यस्मिन्निदं सदसदा-
त्मतया विभाति मायाविवेकविधुति स्रजि वाहिबुद्धिः। तं नित्य-
मुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलं प्रकृतिं प्रपद्ये - इति
जगतो मायामयत्वं ज्ञाननिवर्त्यत्वं रज्जुसर्पनिदर्शनपूर्वकमुक्तं।

तत्रैव-न नन् पुरस्तादुत यत्र पश्चात् मध्ये च तत्र व्यपदेशमात्र-मिति जगतस्त्रैकालिकनिषेधप्रतियोगित्वमुक्तम् ॥

एवं श्रीभागवते कृत्स्नोऽपि ग्रन्थः अद्वैतानुसार्येव वर्तते

अतस्तदनुसारेण श्रुतिस्मृतिसूत्रार्थाः वर्णनीयाः

इति प्राहुरित्यलम् .

समाप्तोऽयं ग्रन्थः.

श्रीः.